इत्युक्तानि। क्वचित् एवः वरिवः शम्भुः परिभूराच्छः'[100] (VS XV 4, adapted) इति। कैश्चित् कृतिः प्रकृतिः संकृति[101] रभिकृतिरत्कृतिरित्युक्तानि।

तत्रोक्तम्—'नूनमथ' (RV. VIII. 46. $15^{a}$) इत्येकपदेयम्। अथात्युक्तम्—'अग्निर्ज्योतिर्ज्योतिरग्निः' (TB. II. 1. 9. 2.) इति द्विपदा।[102] 'सूर्यो ज्योतिः ज्योतिः सूर्यः' (TB II 1. 9 2) इति, 'इन्द्रो ज्योतिः ज्योतिरिन्द्रः' (KS. XL. 6) इति च।[103] अथ मध्यम्—'अग्निर्ज्योतिः सूर्यो ज्योतिः प्रजा ज्योतिः' (TB. II. 1. 2. 11.) इति त्रिपदा। अथ प्रतिष्ठा—'अग्ने पत्नीरिहा वह देवानामुशतीरुप। त्वष्टारं सोमपीतये'[104] (RV. I. 22 9) इत्यत्र त्रिपात्।[105] अथ सुप्रतिष्ठा—'पुरूतमं पुरूणां स्तोतॄणां विवाचि। वाजेभिर्वाजयताम्॥' (RV. VI 45 29) इति त्रिपदा[106]। 'य ऊर्मिर्हविष्य इन्द्रियावान् मदिन्तमस्तं व ऋध्यासम्' (KS XXXV 3) इति, 'अग्ने हंसि न्यत्रिणम्' (RV. X 118. $1^{a}$.) इति च।

एतामपि मध्यगतानि [37] द्व्यक्षरप्रभृतीनि चतुरुत्तराणि 'राट्[107] विराट् स्वराडणामानि' (cf. ṚPr. XVII. 5., NS. I 5) छन्दांसि भवन्ति। तथातिच्छन्दसामपि। तत्र द्व्यक्षरं छन्दो बृहदित्ये[108]कपदेयम्।

अथ षडक्षरम्—'जुम्बकाय स्वाहा' (VS XXV. $9^{d}$) इति।[109] एवमन्यत्रापि द्रष्टव्यानि[110]। केचिद् त्र्यक्षरादीनां चतुरुत्तराणां द्विशताक्षरान्ताणां मध्यगताना[111] छन्दसां 'हर्षीका, सर्षीका, मर्षीका सर्वमात्रा[112]' (cf ṚPr. XVII 20) इत्यादीनि नामानि वर्णयन्ति। तथाऽतिच्छन्दसामपि 'विभृतिः, शक्करी, श्रष्टिः, हाना' (cf. NS I 5) इत्यादीनि पृथङ्नामानि[113] वदन्ति॥[114]

## ॥ ४ ॥ अथ लौकिकम् ॥ ६ ॥

एवं तावज्जगत्यतिजगतीशक्वर्यतिशक्वर्यष्ट्यत्यष्टिधृतिरतिधृतिः कृतिः प्रकृतिराकृतिर्विकृतिः संकृतिरभिकृतिरुत्कृतिरिति पञ्चदश वैदिकानि[115] छन्दांसि भवन्ति।[116] अष्टाचत्वारिंशदक्षरादि[117] चतुरुत्तराणि चतुःशतान्तानि उक्तानि। तथा उक्तमत्युक्तम्मध्यं प्रतिष्ठा सुप्रतिष्ठेति च पञ्च चतुरक्षरादीनि चतुरुत्तराणि विंशत्यक्षरान्तानि उक्तानि।[118] एषु विंशतिषु छन्दःसु लौकिकमपि रूपमस्ति। तच्च पञ्चमाध्यायादौ वक्ष्यते॥

(100) A· क्वचिदेवो परित्र शम्भूरादिति; M क्वचिदेवो वरित्र शम्भु परिभू परिभूराद्दिति; S क्वचिद्देवो परिवशम्भूरान्निति। (101) A drops प्रकृति; M drops प्रकृति। (102) A adds तथा। (103) A & M drop च। (104) A reads अग्ना ई पत्नीवासुसजोर्देवेन त्वष्टा सोम पिब, M reads; अग्मायो पत्नो वामुसजूर्देवेन त्वष्टा सोमं पिबा; S अग्ने पत्नीव हद्देवानां देवेन त्वष्टा रसमपि बत। (105) इति त्रिपदा in all the MSS (106) A adds एव। (107) A drops राट्। (108) A· बृहती। (109) A adds द्विपदेयम्। (110) A एवमन्यान्यपि, M adds इति। (111) M reads षड्विंशते in place of मध्यगतानां। (112) A omits the last two names; M: धर्ममात्रा। (113) M drops. (114) M & S वर्णयन्ति। (115) A वै कृतानि (116) A drops भवन्ति। (117) A & S: क्षरादीनि। (118) A drops उक्तानि।

|| ४ || आ त्रैष्टुभात् यदार्षम्[119] || १० ||

यानि चार्षाणि छन्दांसि चतुर्विंशत्यक्षरादीनि चतुरुत्तराणि चतुश्चत्वारिंशदक्षरान्तानि आ त्रैष्टुभा-च्छन्दांस्युक्तानि गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुबिति, तेष्वपि षट्सु लौकिकमपि रूपमस्ति। इत ऊर्ध्वमपि सर्वत्र लौकिकमित्यधिक्रियते।

[38] || ४ || पादश्चतुर्भागः || ११ ||

उक्तादिषूत्कृत्यन्तेषु षड्विंशतौ छन्दःसु [120]वक्ष्यमाणेषु च मात्राछन्दःसु[121] समप्रविभक्तेषु[122] च चतुर्थो भागः पाद इति ज्ञेयः। तेनोक्तस्यैकमक्षरं पादः गायत्रस्य षडक्षराणि जागतस्य द्वादश[123] उत्कृतेः षड्विंशतिः।[124] अत एवोक्तादीनि एकाक्षरं द्व्यक्षरं दशाक्षरमिति व्यवह्रियन्ते। प्रयोजनं चास्य सूत्रस्य मात्रासमकतनुमध्यादिषु। पादमात्रस्य लक्षणे कथितेऽन्येषामपि तावतां पादानां ग्रहणम्॥

|| ४ || यथावृत्तसमाप्तिर्वा || १२ ||

अथवा समप्रविभागासम्भवे[125] न्यूनाधिकैरपि पादैर्यथा वृत्तस्य चतुष्पाद एव समाप्तिः सम्भवति तत्र तादृश एव चतुर्थो भागः पादः। तेन वैतालीयादिषु द्वयो[126] न्यूनाधिकयोः पादयोर्लक्षणे कथिते तादृशौ द्वावन्यावपि पादौ द्रष्टव्यौ।

पद्यचतूरूर्ध्वं चतुर्द्धा चत्वार एव पादाः। इमानि खलु छन्दांसि वर्णजातयो मात्राजातयश्चेति। तत्रोक्तादय उत्कृत्यन्ता वर्णजातय उक्ताः। वक्ष्यन्ते च। मात्राजातयः पुनरार्यादय इदानीं प्रक्रियन्ते। तासु च काचित् वेदेऽपि दृश्यते। तथा चाथर्वणिकाः श्लोकमार्याजातीयमामनन्ति—

घृतमिव पयसि निगूढं
भूते भूते च वसति विज्ञानम्।
सततं मन्थयितव्यं[127]
मनसा मन्थानभूतेन ॥[128] (Br. Bind. Up. 20) इति।

मात्राजातयोऽपि द्वयम्—गणजातिर्निर्गणजातिश्चेति।

गणजातिमार्यां प्रस्तोष्यन् गणसंज्ञां[129] कथयति—

[39] || ४ || लः समुद्रा गणः || १३ ||

'लः' लघवः समुद्राश्चत्वारश्चतस्रो मात्रा इति यावत्। ता गणसंज्ञा भवन्ति।

स च गणः पञ्चधा प्रयोक्तव्य इत्याह—

(119) A : त्रैष्टुभाच्च यदार्षम्। A drops the words between 120 & 121 (122) M : समप्रवि भक्तेषु। (123-124) A drops. (125-126) A drops due to haplology. (127) A : मन्थयितव्यम् : M : संन्थयितव्यम्। (128) M : मना मन्थानप्रहेन : A : मं न्थानभूतेन (129) M : गणसंज्ञां।

॥ ४ ॥ गौ गन्तमध्यादिर्लश्च ॥ १४ ॥

गौ गन्तो गमध्यो गादिर्लश्च। गौ गुरू द्वौ कदाचिद् गणोऽसौ भवति। गुर्वन्तो वा त्रिकः 'स'-गणः। गुरुमध्यो वा 'ज'-गणः। गुर्वादिर्वा 'भ'-गणः। चत्वारो[130] लघवो वाऽसौ भवति। पञ्चधाऽपि चतुर्मात्र एव गुरोर्द्विमात्रत्वात्। 'लौ स' इति द्वयोर्मात्रयोः स्थाने एकस्य गुरोरुक्तत्वात्। ननु 'लश्च' इति पुनर्ग्रहणमनर्थकं 'लः समुद्रा गण' इत्युक्तत्वात्। नानर्थकं तस्य मात्राविधानार्थत्वात् अस्य च लघुप्रयोगार्थत्वात्। एतेन पञ्चप्रकारेण[131] गणेन आर्याः कर्तव्याः[132]।

अथार्यालक्षणमुच्यते। तत्र[133] गाथाजातयश्चतस्र[134] इति।

तत्र गाथा तावत्—

॥ ४ ॥ स्वरा अर्धञ्चार्यार्धम् ॥ १५ ॥

'गण' इति वर्तते। वचनं विपरिवर्तते। स्वराः सप्तगणा अर्धञ्च गणस्यार्धं श्लोकस्यार्धं स्यात्। साऽऽर्या नाम जातिर्भवति। 'गाथा' नामैषार्या शास्त्रान्तरेषूक्ता। गणानां सप्तानां प्रत्येकं पूर्वोक्तैः पञ्चभिः प्रकारैः प्रयोगे प्राप्ते इदमाह—

॥ ४ ॥ अत्रायुङ् न ज् ॥ १६ ॥

अत्रार्यायामयुक् अयुजो[135] गणाः प्रथमस्तृतीयः पञ्चमः सप्तमश्च जो मध्ये गुरुर्न कर्तव्यः। ततश्चैते गणाश्चतुष्प्रकाराः[136] शेषाश्च पञ्चप्रकाराः[137]।

[40] ॥ ४ ॥ षष्ठो ज्[138] ॥ १७ ॥

षष्ठो गणो 'जो' मध्ये गुरुरेव नियमेन भवति। प्राप्तस्य वचनं नियमार्थम्।

॥ ४ ॥ न्लौ वा ॥ १८ ॥

नगणस्त्रिलघु लघुश्चैक इति चतुर्लघुर्वा[139] षष्ठो गणः।

॥ ४ ॥ न्लौ चेत् पदं द्वितीयादि ॥ १९ ॥

षष्ठो गणो न्लौ चेत् चतुर्लघुश्चेत् पदं द्वितीयाक्षरादि पृथक्[140] प्रवर्तयेत्। षष्ठगणस्य द्वितीयमक्षरं प्रथमञ्च एकः शब्दो न स्यात्। द्वितीयमक्षरमन्यस्य शब्दस्या[141]दिरेव स्यादित्यर्थः॥

॥ ४ ॥ सप्तमः प्रथमादि ॥ २० ॥

सप्तमो गणो न्लौ चेत्[142] प्रथमाक्षरादि प्रवर्तयेत्। प्रथमाक्षरं शब्दस्यादिरेव स्यादित्यर्थः॥

(130) A drops चत्वारो। (131) A drops पञ्च। (132) A कार्या। (133) M तास्च ; S ता च ; M adds पञ्चतथ्य। (134) M & S गाथागीतयश्चतस्र। (135) A अयुग्मो। (136-37) A omits. (138) M & S ज। (139) A न्लौ। (140) A drops पृथक्। (141) A drops शब्दस्य। (142) A adds चतुर्लघुश्चेत् पदं

॥ ४ ॥ अन्त्ये पञ्चमः ॥ २१ ॥

'अर्धम्' इत्यनुवर्तते। विभक्तिर्विपरिवर्तते। अन्त्येऽर्धे पञ्चमो गणो न्लौ चेत् पदं प्रथमात्तराद्येव स्यात् ॥

॥ ४ ॥ षष्ठश्च ल् ॥ २२ ॥

चकारादन्त्य इत्यनुवर्तते। अन्त्येऽर्धे षष्ठो गणो लघुरेवैकः स्यात् न चतुर्मात्रः। इत्थं गाथालक्षणमुक्तम्। तत्रोदाहरणम्—

वन्दे मातरमार्यां वाणीं वर्णाभिमानिनीं देवीम्।
यामेव विदुरुपास्यां परासु[143] गाथासु पथ्यासु ॥

न्लौ वा नौ चेत् पदं द्वितीयादीत्युक्तम्[144]। तद्यथा—

निजमुखविपुलप्रतिबिम्बवति तमिव[145] हारतरलतारेषु[146]।
[41] वीक्षितुमासीनोरसि भर्तुर्जगदखिलमवतु रमा ॥

॥ ४ ॥ त्रिषु गणेषु पादः पथ्याद्ये च ॥ २३ ॥

त्रिषु गणेषु आद्येषु पादः क्रियते। आद्ये प्रथमेऽर्धे, चकारादन्त्ये च। सा गाथा 'पथ्या' नाम भवति। पूर्वमर्धस्य लक्षणविधानात् पादसद्भावाभावौ नोक्ताविति वचनम्। तेनात्राप्याद्य एव श्लोक उदाहरणम्।

॥ ४ ॥ विपुलाऽन्या ॥ २४ ॥

अन्या गाथा 'विपुला' यस्यास्त्रिषु गणेषु पादो न क्रियते। सा च 'पूर्वे मुखपूर्वे'त्यादिना वक्ष्यमाणन्यायेन मुखादिविशेषणत्रयस्यात्रापि सम्बन्धसद्भावात् त्रिधा विपुला। मुखविपुला, जघनविपुला, महाविपुला चेति।[147] तत्र 'मुखविपुला' सा यस्या न पूर्वार्धे पादव्यवस्था। यथा—निजमुखविपुलप्रतिबिम्बेत्यादि (loc. cit) श्लोकः। यस्या नोत्तरार्धे सा 'जघनविपुला'—

सा जयति जघनविपुला गौरी यस्या जितस्मरोऽपि हरः।
दिक्सङ्गतो[148] द्वितीयात्वमपि न सहतेऽद्वितीयायाः ॥

यस्या नोभयोरर्धयोः सा 'महाविपुला'। यथा—

विभजन् वेदांश्चतुरः ककुभ इवाम्भैश्चतुरः स विजयते।
यस्माल्लब्धवरस्यैव जनस्यैते[149] महाविपुलाः ॥

॥ ४ ॥ चपला द्वितीयचतुर्थौ गुर्मध्यौ जौ ॥ २५ ॥

द्वितीयचतुर्थौ गणौ जौ मध्यगुरू स्याताम्। तदा गाथा 'चपला' नाम भवति। तौ च मध्ये गुरू गणौ मध्यौ गुरोर्मध्यगतौ स्तः। ततश्च प्रथमो गणो गुर्वन्त एव स्यात्। तृतीयो गुरुरेव द्विः। पञ्चमो गुर्वादिरेव। इत्येवं गुर्वोर्मध्यगतौ जौ भवतः ॥

(143) A: श्रुवयो। (144) A: द्वितीयादीत्याद्युक्तम्; M: द्वितीयादीतम्। (145) A: प्रतिबिम्बवद्गतिनिभ
(146) M: हारतरलं भारेषु; S: हारतरलभारेषु। (147) A adds केचित्। (148) A: ऐक्यं गतौ
(149) M: जनस्य हे।

[42] ॥ ४ ॥ पूर्वे मुखपूर्वा ॥ २६ ॥

पूर्वार्धे चेदिदं चपलालक्षणं तदा मुखशब्दपूर्वा चपला भवति। मुखचपलेति यावत् ॥

॥ ४ ॥ जघनपूर्वेतरत्र ॥ २७ ॥

इतरत्र द्वितीयार्धे चेदिदं चपलालक्षणं तदा 'जघनपूर्वा' चपला भवति। जघनचपलेति यावत् ॥

॥ ४ ॥ उभयोर्महाचपला ॥ २८ ॥

उभयोरप्यर्धयोश्चेदिदं चपलालक्षणं तदा महाचपला। एतास्तिस्रोऽपि पथ्यया विपुलाभिश्च सहैव भवन्ति। ताश्च प्रत्येकं चतसृभिः सम्पर्काच्चतुर्धा चतुर्धेति द्वादशचपला.। केवला[150]श्चतस्र इति षोडशचपलाः। तत्र पथ्यामुखचपला—

देवाधिनाथ नाथं हरिं पुराणं विनैव भगवन्तम्।
या स्तौत्यन्यजन्मतः सा नष्टा सैव[151] मुखचपला ॥

अथ मुखविपुला जघनचपला—

भगवति भवव्याधिभिषजि निष्ठां[152] विनाऽस्ति का दयिताः।
यदमी जना विना तामुपासते जघनचपलां स्त्रीम् ॥

अथ जघनविपुला महाचपला—

आस्तां विमुक्तिरेताः स्त्रियोऽपि दयाः कथं महाचपलाः।
सेवां विना गिरीशस्य बालरामा इव श्वश्रूम् ॥

एवमन्या अपि द्रष्टव्याः।

इदानीं गीतयोऽधिक्रियन्ते।

॥ ४ ॥ आद्यर्धसमा गीतिः ॥ २९ ॥

आद्येनार्धेन समा यदि सर्वा स्यात् तदा गीतिः। आद्येनार्धेन साम्यं चार्याया आद्येनार्धेन अन्त्यस्य साम्यम्। आद्यार्धे षष्ठो गणो 'जो' वा 'न्लौ' वा स्यादित्युक्तम्। [43] अन्त्येऽर्धे षष्ठश्च 'ल्' इति लघुमात्रत्वं विहायान्त्येऽपि[153] षष्ठो 'जो' वा 'न्लौ' वा स्यात् सा गीतिः। [154]पञ्चमे च लघुशब्दस्य प्रथमादित्वनियमो न स्यात्, सप्तमे सर्वलघुश्च स्यात् ॥[155]

॥ ४ ॥ अन्त्येनोपगीतिः ॥ ३० ॥

अन्त्येनार्धेन यदस्य समः स्यात्। आद्येऽप्यर्धे षष्ठो गणो लघुमात्र एव। पञ्चमे च सर्वलघौ शब्दस्य प्रथमादित्वनियमः[156] स्यात् तदा उपगीतिः ॥

(150) A adds च पथ्यादय। (151) M: सा कष्टा सैव; A: सा कष्टायैव। (152) A drops निष्ठां M: निरुभृजि निष्ठां। (153) A: लघुमात्र उक्त। अयदि लघुमात्रत्वं विहाय (154-55) A drops; S drops सप्तमे सर्वलघुश्च स्यात्। (156) A: प्रथमादि पर।

## ॥ ४ ॥ व्युत्क्रमेणोद्गीतिः ॥ ३१ ॥

व्युत्क्रमेण पूर्वार्धे षष्ठो गणो लघुमात्र उत्तरार्धे षष्ठो 'जो' वा 'न्लौ' वा स्यात् तदा[157] उद्गीतिः। एतास्तिस्रो गीतयो[158]ऽपि पथ्यया विपुलादिभिश्च संयुज्यन्ते। ततः षोडशभिः सम्बन्धात् प्रत्येकं षोडशधा इत्येता अष्टचत्वारिंशत्। गाथाश्च षोडशेति चतुःषष्टिरार्याः। तत्र 'पथ्यागीतिः'—

गायति गीतं काचित् कलकण्ठी[159] वीणया समं सलयम्।
एकाधिपतिर्धीरो वीरो रामो बभूव राजेति ॥

मुखविपुलोपगीतिः —

अन्योपगीतिमाकर्ण्य कृतेर्ष्या गायति वयस्या।
एकाधिपतिर्भूम्या दिवश्च[160] कृष्णो बभूवेति ॥

जघनविपुलोद्गीतिः—

उद्गातर्युद्गीतिं कृतवति शस्त्रे सुशस्ते[161] च।
हुत्वा मद्यमसान् सदसि महान्तोऽर्चयन्ति हरिमार्याः ॥

एवं चपलाभिरपि गीतीनां योगः स्यात्। तत्र पथ्यामुखचपलादिभिर्गीतिः —

अन्ये सममममर्थं समर्प्य दानेन[162] तोषयन्ति हरिम्।
भगवत्सु समचपला मुखचपला गीतिं वितन्वते पथ्याम् ॥

(जघनविपुला मुखचपला गीतिः)

अन्ये कुचमुखविपुलासु गीतिषु शालासु जघनचपलासु।
सक्ता हरावसक्तास्त्वधोमुखा[163] यान्ति दुर्गतिं मूढाः ॥

(महाविपुला गीतिः)

अन्ये तु गीतिरम्याः विना महाचपलजघनविपुला स्त्रीः।
[44] भगवन्तमेव संसाररोगवैद्यं भजन्ति शरणमिव ॥[164]

(जघनविपुला महाचपला गीतिः)

एवमन्या[165] द्रष्टव्याः।

## ॥ ४ ॥ अर्धे वसुगणा आर्यागीतिः ॥ ३२ ॥

गाथायाः गीतीनां चार्धे वसुगणे वसवोऽष्टौ गणा यस्मिन् सा स्वार्यागीतिर्नामार्या भवति। तत्रापि गाथादीनां पूर्वार्धे अष्टगणे मुखार्यागीतिः, उत्तरेऽर्धे जघनार्यागीतिः, उभयोर्महार्यागीतिरिति सङ्केतः। शास्त्रान्तरे पुनरासां पृथक् संज्ञा उक्ताः[166]। उक्तया गीत्या सहार्यागीतिः सा महार्यागीतिः। स च स्कन्धः।[167] एषैव या गाथया सह साऽवस्कन्धा उपगीत्या सह सोपस्कन्धा योद्गीत्या सह उत्स्कन्धा। या मुखार्यागीतयो जघनार्यागीतयश्च, ताः सङ्कीर्णा इति। एवं गाथादीनां

(157) A : सा च। (158) A drops गीतयः। (159) A : मधुकण्ठी। (160) M : दीपश्च। (161) M : सुशान्ते। (162) A : सभाज्य मानेन ; S : सभाजयमाने। (163) A : स्मरातुरा। (164) M & S शरणमिमं। (165) A adds अपि। (166) A drops उक्ता। (167) M & S drop the sentence.

मेदैश्चतुःषष्ट्या पूर्वापरोभयार्धभेदेन अन्वयात्[168] प्रत्येकं त्रिधा इति अष्टोनशतद्वयमार्यागीतिप्रकाराणाम्। प्रस्तारभेदाश्चतुःषष्टिरिति द्वे शते षट्पञ्चाशच्चार्या[169]भेदाः। एते च महाप्रभेदा एतेषामेकैकस्मिन्नपि प्रस्तार्यमाणे[170] एकैका कोटिः सम्पद्यते। तत्र पथ्यागीतिर्महार्या[171] गीतिः—

कुर्वन्नार्यागीतिं सदात्मनि सनातनं हरिं भगवन्तम्।
परमेशान्तः शान्तः क्षान्त उपरतः समाहितो मुच्येति॥

मुखविपुला मुखचपला[172] गाथामुखार्यागीतिः—

भगवन्तमेव साधिष्ठ[173]वंशजं स्तोष्यतां[174] यदि विपन्मा भूत्।
इति खल्वार्यागीतिं कुर्वन्ति मनोरथमापन्नाः॥

जघनविपुला जघनचपलोद्गीतिः जघनार्यागीतिः—

एवमार्यागीतिं कुर्वन्तीव[175] महामनोराज्ये।
धर्मार्थकाममोक्षेषु वर्तिनो महितोमन्यतमस्मिन्निति॥[176]

महाविपुला महाचपलोद्गीतिर्महार्यागीतिः—

वक्ष्यामि तेन धर्मार्थकाममोक्षानि ह्योदाहरणे।
[45] वाचं ममोपशृण्वन्तु पुत्रकस्येव वल्गुमार्यागीतिम्॥

एवमन्येऽपि प्रकारा द्रष्टव्याः। इत्यार्याजातिः।

अथ नियंयशतयोऽनुप्राधिक्रियन्ते—

॥ ४ ॥ वैतालीयं द्विः स्वरा अयुजो युग्वसवो ल्गौ ॥ ३३ ॥

'ल्' इत्यनुवर्तते 'पाद' इति च। द्विः स्वराः द्विरभ्यस्ताः सप्तलघवः चतुर्दशमात्रा इति यावत्। अयुक्पादः प्रथमस्तृतीयश्च। युक्पादः द्वितीयश्चतुर्थश्च द्विर्वसवः षोडशमात्राः स्युः। सा वैतालीयं नाम जातिः। यास्वेव चतुर्दशसु च मात्रासु कश्चिन्नियमभाङ्। 'अन्त र्लौ' इति।

अन्ते पादानां 'रलगा'[177] एव नियमेन कार्याः।[178] र्-गणो मध्यलघुः।[179] अत्र ग्लाविति धिकाराद्गुरवो लघवश्च यथाक्रमं प्रयोक्तव्याः। तत्रापि 'लौ स' इत्युपतिष्ठते। तत्रापि द्वयोर्मात्रयोः स्थाने एको गुरुः स्यात्—

महति तपसि सक्तचेतसो-
ऽतिघन्याः सन्त्यनेकसम्पदः।
शुक्लाः प्रकटास्थिपञ्जरा
वैतालीयतनुं वितन्वते॥

(168-69) A drops the lines. (170) A प्रस्तार्यमाणे। (171) A : मुख्यार्या। (172) M drops मुखचपला (173) M : धनिष्ठ। (174) A M & S : नो सतां। (175) A : कुर्वन्ति न। (176) A : महान्यदमन्निद; M : महान्यस्मिन् स्युर्यदिति; S : महितो मतस्थिरा। (177) A : लघुर्गुरुश्च। (178-79) A drops the words.

॥ ४ ॥ गौपच्छन्दसिकम् ॥ ३४ ॥

अन्त इत्यनुवर्तते।[180] एषामेव वैतालीयपादानामन्तेऽन्योऽपि गुरुरेको भवेत् सा औपच्छन्दसिकं नाम जातिः —

पश्यत्सु परेषु मीलिताक्षाः
निभृताङ्गाश्च रहस्यमीष्टचेष्टाः।
चरितं परिमोहन परेषा-
मौपच्छन्दसिकं खलाश्चरन्ति ॥

॥ ४ ॥ आपातलिका भौ गौ ॥ ३५ ॥

आस्वेव चतुर्दशसु षोडशसु च मात्रासु अन्ते भो गुरू च द्वौ नियतौ स्युः। सा आपातलिका नाम जातिः —

अधन[181] प्रतिनोर्दिवमेको
यास्यति चरितैर्दुर्गतिमन्यः।
सम्प्रति भेदं चरतो द्रा-
बापातलिका निष्कसितान्ता ॥
आपातलिका स्यालीत्यर्थः॥

[46] ॥ ४ ॥ शेषे परेण युङ् न साकम् ॥ ३६ ॥

वैतालीयादीनां पादान्ते 'र्गौ' इत्यादि नियमः कृतः। अयुक्पादस्यादौ षण्णां मात्राणां युक्पादस्य चाष्टानां नियमो न कृत इत्यारम्भः। शेषे पदादौ परेण लघुना परया मात्रया युग्लघु द्वितीयश्चतुर्थः षष्ठश्च। न साकं न सहैकीभवति। नैकेन गुरुणा युग्मां मात्रां परया मात्रया युञ्ज्यात्। तयोः स्थाने नैको गुरुः स्यादित्यर्थः। पूर्वया[182] तु युञ्ज्यादेव। तथा च—निधिन्वत्स्यत्यय नैकदसम्पदः[183] इत्यादि कृते—

॥ ४ ॥ षट् चामिश्रा युजि ॥ ३७ ॥

चकारो नेत्यनुकर्षणार्थः। युक्पादे द्वितीये चतुर्थे चादावष्टसु मात्रासु षण्मात्रा अमिश्रा गुर्वेकीभूता[184] न कर्तव्याः। निरन्तराः न षट् लघवो कर्तव्याः। अयुजि तु[185] विद्यन्ते एव। तथा च 'महति तपसि' इत्युक्तम्।

॥ ४ ॥ पञ्चमेन पूर्वः साकं प्राच्यवृत्तिः ॥ ३८ ॥

युजीत्यनुवर्तते। पञ्चमेन लघुना पूर्वो लघुश्चतुर्थः सहैकीभवेत्। युजि पादे चतुर्थपञ्चम्यौ मात्रे एकेन गुरुणाऽधिक्रियेयाताम्। प्राच्यवृत्तिर्भवति। 'शेषे परेण युङ् न साकम्' (IV.36) इत्यस्यायमपवादः॥

(180) A omits the sentence. (181) M: अथनं। (182) M: पूर्वया (183) A. धन्या सम्प -सनै कसम्पद (184-85) A drops the words

॥ ४ ॥ अयुक् तृतीयेनोदीच्यवृत्तिः ॥ ३६ ॥

अयुजः पादस्य तृतीयेन लघुना पूर्वो द्वितीयः सहैकीभवेत् उदीच्यवृत्तिः ॥[186]

॥ ४ ॥ आभ्यां युगपत् प्रवृत्तकम्[187] ॥ ४० ॥

आभ्यां लक्षणाभ्यां युगपदेकत्र कृताभ्यां प्रवृत्तकं भवति। युजोः पादयोर्प्राग्वद्ग्रहणमिति।[188] आभ्यां प्रवृत्तकमित्येतावद्वक्तव्यमिति। पुनर्युगपद्ग्रहणं [47] क्वचिदयुक्पादविलक्षणानां प्रवृत्तिं सूचयितुम्। तेन विपुला[189] आर्यागीतिचारुहासिन्यादिषु अयुक्पादविलक्षणप्रवृत्तिसिद्धिः। एतानि प्राच्योदीच्यवृत्तिप्रवृत्तकानि वैतालीयादिभिः सहैव भवन्ति। तेन तानि नव वैतालीयाद्यास्तिस्र[190] इति द्वादश। तत्र वैतालीयप्राच्यवृत्तिः—

न विपन्ने च लोकगर्हणयप्राच्यवृत्तिमुपजीवता नृणाम्।

अविवादमगर्हितां बुधैः पितृपैतामहपरम्परागताम्॥

औपच्छन्दसिकोदीच्यवृत्तिः —

उदीच्यविषयेषु मानवानामेनेनैव निरूप्यते प्रवृत्तिः।[191]

यदेव सवितास्युदीच्यवृत्तिः मीनं मेषवृषौ मृगञ्च भुङ्क्ते॥

आपातलिकाप्रवृत्तकम्—

स ह्रास्यनुपयास्यति लोके यो रमेत वनितासु तपस्वी।

प्रवृत्तकमसद्गर्ग्योऽयं चापलादिव चरन् पलिताङ्गः॥

आपातलिकाप्राच्यवृत्तिः —

जातह्रीका बहुरागां[192] प्राच्यवृत्तिमनुचिन्त्य बुधा स्वाम्।

बाल्ये यत् सत्स्ववहेलं[193] ग्राम्यवागनुचितं च कुर्वन्ति॥

कैश्चिदनुपानलिकेत्यस्याः संज्ञोक्ता॥

॥ ४ ॥ अयुक् चारुहासिनी ॥ ४१ ॥

वैतालीयादीनामयुक्पादलक्षणं श्लोकस्य चतुर्ष्वपि पादेषु स्यात्। सा चारुहासिनी जातिः। अयुजश्च पादस्य लक्षणद्वयमुक्तम्—मात्राद्वयस्यासत्त्व[194]मुदीच्यवृत्तित्वञ्च। तद्यदि चत्वारोऽपि पादा न्यूनमात्रा वोदीच्यवृत्तिलक्षणा वा उभयात्मका वा स्युः चारुहासिनी सा स्यात्। सा च वैतालीयादिषु प्रत्येकं त्रिधा त्रिधेति नवधा स्यात्। वैतालीयादयश्च द्वादशेत्येकविंशति प्रकाराः। तत्र वैतालीयादिपादैर्न्यूनमात्रैर्यथा—

दशनद्युतिचारुहासिनी स्तनविनतवलग्नमन्थरा।

विश्वन्तरसः सुराङ्गना [48] तेनानुमिता[195] फलोन्नतिः॥

(186) A सहैकैव भवति। (187) M: प्रवर्तकम्। (188) A प्राच्यवृत्तिलक्षणमिति। (189) A omits विपुला। (190) M: चतस्र (191) A; वृत्तिः। (192) A. धुन्वन्ति हि या मुहुरङ्गं। (193) M & S. सत्तेवं। (194) A: मात्राद्वयन्यूनत्वं। (195) A & S: तेनानमिता।

एतामुत्तरान्तिकेति केचित्। अथ सोदीच्यवृत्तिलक्षणैः—

बभूव जनकोऽपि यां वधूं निरीक्षितुमनुदिशं चतुर्मुखम्।
न साऽपि शशि[196] चारुहासिनी निरीक्ष्यते मुनिभिस्तपस्विभिः॥

दक्षिणान्तिकेत्येके। अथोभयात्मकैः पादैः —

तपोविपरिणाम[197] एष यदनानि विपुलानि बान्धवाः।[198]
वधूश्च मदचारुहासिनी परञ्च कुशलं विपश्चिताम्॥

एवमौपच्छन्दसिकापातलिकयोर्द्रष्टव्यम्। अथापातलिकापादैर्न्यूनमात्रैः —

हा तात हे भ्रातः पुत्रावित्युक्तगिरां नरकेषु।
स्मरत नराणामघभाजां चरत च[199] धर्मं दुरितारिम्॥

अवपातलिकेत्येके। चारुहासिनो नाम युग्मलक्षणत्वात् युग्मेष्वपि पादेषु निरन्तराः पल्लघवः प्रत्यग्रम्॥

## ॥ ४ ॥ युगपरान्तिका ॥ ४२ ॥

वैतालीयादीनां युक्पादलक्षणं सर्वेषु पादेषु स्यात्। सा धापरान्तिका। युक्पादलक्षण द्विविध— मात्राद्वयस्याधिक्यं प्राच्यवृत्तित्वञ्चेति। तद्यदि मात्राधिका वा सा प्राच्यवृत्तिलक्षणा वोभयात्मिका वा पादाः, तदाऽपरान्तिका। एषा पूर्ववत्त्रयेति त्रिप्रकारा वैतालीयादीनाम्। तत्र वैतालीयपादैर्मात्राधिकैर्यथा—

न मुनिर्लोचनगोचरो वरोऽवनितानां मदलोलचक्षुषाम्।
भूत्वा ता हि[200] किलापरान्तिकाः तच्चित्तं लघूकर्तुमीशते॥[201]

एषाऽपि दक्षिणान्तिकेत्येके। अथ सा प्राच्यवृत्तिलक्षणैः —

न परिदृष्टजीवितक्षया नोपलब्धविभवाऽपरान्तिका।
कामुकीव[202] दृष्टगर्हणा किन्तु मोहयति केवलं जनम्॥

पूर्वान्तिकेति केचित्। अथोभयात्मकैः —

या परान्तिका सा परकान्ता सा न तस्य तप एव रुणद्धि।
अपि तु कीर्तिमपमार्ष्टि मतिञ्च प्राणमप्यवरुणद्धि कदाचित्॥

उत्पातलिकेति केचिदिति।

[49] अथ मात्राधिकैः पादैः —

क्व मुनिर्भवनेष्वाप्तवासः[203] क्व च वनितास्तनतारविहारः।
जहिहि वरारोहास्व[204] गुणज्ञं यदि तपसे स्पृहयेत्तव चित्तम्॥

नलिनमिति केचित्। शेषाश्च द्रष्टव्याः।

(196) A drops न सापि शशि। (197) M: तपोविपरिणाम। (198) S: बाधिपा। (199) M: विचरत। (200) M: तर्हि। (201) M: लघुमुग्धा चित्तान्यपहर्तुमीशते। (202) A: कामुकी स; M: कामुकी न। (203) A: मुनिभवनेषु प्रस्तरवास, M: भवनेष्वास्तरवास। (204) A: वरासु स्त्रीषु।

अयुग्मेष्वपि पादेषु यथायोगं 'षट् चामिश्रा युजो'ति द्रष्टव्यम्। युग्मपादलक्षणत्वात् अपरान्तिका-नामपि च—

स तपस्यति[205] यस्य योषितां नयनश्रोर्न करोति कौतुकम्।
अपि तापधना[206] सुवर्चला कुसुमश्रीरिव सुप्रबोधिता॥

इतीदमर्धसमाधिकारे सुवर्चलेति केचित्। अन्ये तु प्रबोधितेति नामेति। अस्मिंस्तु शास्त्रे वैतालीय-प्रकार एवार्धसमाधिकारः स्यात् सूत्राभावात्। तथा—

अलका बहुका वराङ्गनानां कुटिलालीनतमा[207] मुहुर्विमुक्ता।
विमलद्युतिमेदुराः पुमांसः हृदयस्थास्तपसो निवर्तयन्ति॥

इदमपि तत्रैवार्धसमं विमलद्युतिरिति नाम वृत्तमिति केचित्। अस्मिन् शास्त्रे औपच्छन्दसिकमेव। इति वैतालीयजातिः॥

॥ ४ ॥ गन्ता द्विर्वसवो मात्रासमकं लनवमः ॥ ४३ ॥

तः, पादः, शेषे परेण युङ्नेति चानुवर्तते। गन्ता गुर्वन्ता द्विर्वसव द्विष्कृता अष्टौ लघवः षोडशमात्रा इति यावत्। ता एकपादे स्युर्मात्रासमकं नाम जातिः। तत्र नवमो लघुरेव। नवमो मात्रा लघुनैव क्रियते न गुरुणा। अत्र तुल्या एव चत्वारोऽपि पादाः—

तिष्ठतु तावद्द्विषतां सुकृतं
सुकृतकृतं लघुचपलं[208] प्रेत्य।
यशोऽप्यधुनाऽपि मुहुरुज्ज्वलनः
को वा मात्रासमकं किं वा॥

यद्यपि 'गन्त' इति युग्मयोर्गुर्वन्त [50]-त्वं सिद्धमेव, तथाप्ययुग्मयोर्न सिद्धम्। उक्तम्। तेन चतुर्णां पादानामन्ते द्वयोर्मात्रयोः स्थाने गुरुरेकोऽवश्यं कर्तव्यः। अत्र गणैर्विधानाभावेऽपि चतसृभिर्मात्राभिरायां-शानिव गणमभ्युपगम्य विवेक उच्यते। 'शेषे परेण युङ् न साक'मित्यधिकारात् सर्वत्र जगणो न कर्तव्यः। तत्र पादानामाद्यो गणश्चतुर्धैव भवति। द्विगो गान्तो गादिश्चतुर्लघुश्चेति। द्वितीयश्चेति चित्रा-नवमश्चेति चतुर्लघुत्वे संज्ञान्तरस्य वक्ष्यमाणत्वात् त्रिधैव भवति। नवमस्य लघुत्वनियमात् गान्त एव चतुर्थो गन्ता इत्युक्तत्वात्। 'द्विगो गान्तश्चे'ति॥

॥ ४ ॥ द्वादशश्च वानवासिका ॥ ४४ ॥

एतास्वेव लघुनियमासु द्वादश्यपि मात्रा लघुरेव स्यात्। सा वानवासिका नाम—

वात्सल्य एव स्वयमपि दूरा-
दानेन महो विकचकुसुमसाम।
एवं यशसा भुवि सुकृतानां[209]
अथाप्यत एव स्वयमपि नमः[210]॥

(205) A: स च पश्यति। (206) M & S: अप्रीति घना। (207) A: कुटिला नीलतमा। (208) M: लघुवचः। (209) A: सुकृतानो। (210) A: स्वयमपि दा भू; M: स्वयमपि सतः।

अस्यास्तृतीयः सर्वलघुरेव। केचित्तु गुरुमध्यमपीच्छन्ति। तथाऽपि विश्लोके गुरुमध्यं द्वितीयं विभागं तृतीयञ्च। नैतदाचार्यस्य पिङ्गलनागस्य मतं, यतः शेषे परेण युङ् न साकमित्यनुवर्तते। तच्चात्राङुङ् न जित्यत्र (IV 36) ग्रहणेन सिद्धम्। तद्धि परस्तादनुवृत्तिं वारयदितरेषामनुवृत्तिं सूचयति। तस्मादेते प्रकाराः यदि कथञ्चित् साध्यास्तत्रासिद्धं गाथेति (VIII.1) द्रष्टव्यः॥

॥ ४ ॥ विश्लोकः पञ्चमाष्टमौ ॥ ४५ ॥

'ल' इत्यनुवर्तते। पञ्चम्यष्टमी च मात्रे लघुरेव स्याताम्। सा च जातिर्विश्लोको नाम। शेषं यथाप्राप्तम्—

जीवति न स भुवि नापि परतो न
च यः [51] सुखयति न स सुखी वा स्यात्।[211]
विद्याधनबललक्ष्म्यादिमतीं
स्तवने विजहति यं विश्लोकम्॥

अत्र द्वितीयः सर्वलघुरेव तृतीयो त्रिधा द्विगो गान्तो गादिश्चेति[212]॥

॥ ४ ॥ चित्रा नवमश्च ॥ ४६ ॥

नवमी पञ्चम्यष्टमी च मात्रा लघुरेव स्यात्। सा चित्रा नाम। द्वादश्या मात्राया लघुत्वेऽपि चित्रैव स्यात् न वानवासिका, लक्षणगौरवात्—

इन्दुमणिरिव भवतु तपसि रुचिः
कान्तिमपि यश इव विसृजतु विशदाम्।
अथ च स्फुट इव शशिनि कलङ्किनि
चित्रा रुचिरपि विरूपच्छायैः॥

अस्या द्वितीयः सर्वलघुरेव तृतीयो द्विधा गन्तः सर्वलघुश्चेति॥

॥ ४ ॥ परयुक्तेनोपचित्रा ॥ ४७ ॥

नङ्गेन,परयुक्तेन नवमीदशमीमात्रयोरेकेन,गुणा कृते उपचित्रा—

असमं सुसमं कुर्वन्ति खलाः
सन्तमसन्तं युक्तमयुक्तम्।
दिग्धा यशसा धर्मरताना-
मुपचित्रा इव भित्तिकवर्णाः[213]॥

अस्या द्वितीयस्त्रिधा—द्विगो गन्तो गादिश्च। तृतीयो द्विधा—द्विगो गादिश्चेति॥

(211) A : न स्यात् सुखयति न स्वसुखभाक्। (212) A & M द्विधा द्विगा गादिश्च। (213) A : भित्तिषु वर्णाः ; M : भित्तिवर्णाः।

॥ ४ ॥ एभिः पादाकुलकम् ॥ ४८ ॥

एभिर्नवैमात्रसमकानां पादैर्मिलितैः पादाकुलकं नाम जातिः—

अनिशं मीलितकुमुददृशा दिकः[214]
सुकृती दीपोऽभ्युदितनमो घ्नन्।
लोकं भुवि निजपादाकुलकं
नमयति रविरिव यशसोद्गच्छन् ॥

मात्रासमवानवासिकाविश्लोकचित्रापादैरिदम्।

गुरुभिर्लघुभिश्चोदितरूपान्
साहलीभिः कविवाग्भिश्च।
सुकृती सुवृत्तैः कुरुते श्लोकान्
कविरिव पादाकुलकाद्यर्थम्[215] ॥

तत्रोपचित्राया आद्यः पादः। अन्ये [52] मात्रासमकस्य। एवमन्यान्यपि द्रष्टव्यानि। एतानि विंशतिश्च पादाकुलकानि ॥

॥ ४ ॥ गीत्यार्या लः ॥ ४९ ॥

एता एव षोडशमात्रा लघव एव स्युः। न गुरुभिः क्रियेरन्। गीत्यार्या नाम स्यात्।

सुत इह सति भुवि पितृगुणगणभृति
मृतमपि जनमभिदधति न मृत इति।
यशसि च शमदमलघुनिलतमिति च
तदचलधृतिरिह तप उपचिनु पुरु ॥

ननु तत्रैषा किमिति मात्राभिर्लक्ष्यते। नियताक्षरसंख्यत्वादक्षरैरपि लक्षयितुं शक्यते। वृत्तप्रकरणे पठितव्येति। सत्यम्। 'शिखा विपर्यस्तार्धा' (IV.50) इत्यत्र षोडशमात्रास्थाने अष्टानामेव ग्रहणं यथा स्यादिति। अन्यथा षोडशाक्षरस्थाने षोडशैव गुरवः स्युः ॥

॥ ४ ॥ शिखा विपर्यस्तार्धा ॥ ५० ॥

गीत्यार्याया एवार्धं विपर्यस्येत। गुरुभिः करणं लघुभिर्विहितायाः। सा शिखा नाम[*] पुनर्विशेषमाह—

॥ ४ ॥ लः पूर्वश्चेज्ज्योतिः ॥ ५१ ॥

विपर्यासश्च।[216] पूर्वो भागः पूर्वमर्धं लघव उत्तरमर्धं गुरवश्च। सा ज्योतिर्नाम शिखा—

तृणमिव दहदघकलुषमशिखमिह
दिशि दिशि ततयश उपचितमपि पुरु।[217]
दीपज्योतिर्हस्ते कुर्वा-
न्नेनु[218] लोकान् प्रत्यन्तेऽपि ॥

(214) A· दर्शनकः ; M: दशनकः। (215) A· पादाकुलकाभिः। (216) A: विपर्यासे च पूर्वो।
(217) A: उदश्चित तत उरु।

॥ ४ ॥ गश्चेत् सौम्या ॥ ५२ ॥

[53] पूर्वो भागो गुरवः अपरो भागो लघवश्चेत् सौम्या नाम शिखा—

कोकिलैश्चैषा सेव्यैष्वग्रे

भाति भ्रूरा सौम्ये सौम्या ।

सुखयति शशिरुचिरवनलगनमपि

परमतिहृदि शरदवमपि दहति च ॥[219]

यद्यपि आर्यादिषु[220] सर्वत्र पादान्त एव यतिस्तथापि मात्रासमकादिषु मात्रास्वष्टासु नियमाश्रयणं कासुचिद्भवति[221]। तदिदं द्विरेव इति सूचितम्। अन्यथा षोडशेति ब्रूयात्। इति मात्रासमकादिजातिः॥

॥ ४ ॥ चूलिकार्धमेकोनत्रिंशदन्ते ग् ॥ ५३ ॥

अर्धमेकोनत्रिंशन्मात्राः स्युः चूलिका नाम स्यात्। अन्ते द्वयोर्मात्रयोः स्थाने एको गुरुः स्यात्। अन्ते गुरुत्वस्य नित्यप्राप्तस्य पुनर्वचनं परिसंख्यार्थम्। अन्त एवैकस्मिन् गुरुत्वमन्यत्र लघुत्वमेवेत्यवधारणम्। अर्धस्य विधानात् नात्र पादव्यवस्था। तत एवैषाऽऽर्यालक्षणेषु क्वचिदपि न लक्षिता। अपरवक्त्रेषु हि वृत्तेषु पादव्यवस्था नियता। अनुक्तविशेषाणामार्याकृतित्वादुपगीतिमार्गगीतित्वेन कार्येति।[222] केचिदेतामतिरुचिरेति—

फलमपि सुकृतिजनमभिहितसुखसुखमि-

ह भवति भुवि पृथुपरः ।

पुनरपि फलदुरु भगवति मधुमपि

घटयति सुमतिमतिरुचिरान् ॥

चित्रजातिर्नामैषा। अस्यामेव द्विपदीप्रकारा[223]।

॥ ४ ॥ सा ग्येन न समा लां ग्ल इति ॥ ५४ ॥

अथ यदि कश्चिदुद्देशार्यां वैतालीयादिकं चोदयन्—अस्मिन् श्लोके कति गुरवः कति लघव इति—तत्र स्थितान् वर्णांस्तेनैव संख्यापयेत्। ते यावन्तः संख्यया आर्यादीनां विहिताभ्यो मात्राभ्यो हीयन्ते, तावन्तो गुरवः शिष्टा लघवः। तद्यथा—वन्दे मातरमार्याम् इत्यत्र चतुर्दश-[54]-अक्षराणि सन्ति। अस्याश्चार्याया विहिताः सप्तपञ्चाशन्मात्राः। ताभ्य एते शोधितास्त्रयोविंशत्या हीनाः। तत्र त्रयोविंशति गुरवोऽत्र शिष्टा एकादश लघवः। तदाह—सा ग् गुर्वी संख्या गुरूणां संख्येति यावत्। काऽसौ? येन येन प्रमाणेन न समाः। के? ग्लः गुरवो लघवश्च। श्लोके स्थिता वर्णाः। केषां न समाः? लां मात्राणामार्यादीनां विहिताभिर्मात्राभिरित्यर्थः। शोध्यन्ते च तेन गुरुलघुज्ञानेनार्यादयः॥

इति भगवतो यादवप्रकाशस्य कृतौ पिङ्गलनागच्छन्दोविचितिभाष्ये चतुर्थोऽध्यायः॥

(218) A & S ॰षु । (219) The second half of the verse is corrupt in A, M, T & S Hence the emendation (220) M & S · शिखादिषु (221) A : विषमास्वपि सौम्यानामिति । (222) A drops the sentence. (223) M drops the two sentences.

# [55] अथ पञ्चमोऽध्यायः

॥ ५ ॥ वृत्तम् ॥ १ ॥

अथ वृत्तछन्दांस्यधिक्रियन्ते ।[1]

यानित ऊर्ध्वमनुशिष्यामः श्लोकांस्ते वृत्तानीति वेदितव्याः। वृत्तशब्दोऽयं वर्णनियमेन लक्ष्येषु श्लोकेषु प्रसिद्धः।[2] वर्णनियमश्च द्विधा—संख्या, गुरुलघुविन्यासश्चेति। पूर्वं श्लोकाः मात्रानियमेन लक्षितत्वान्मात्राच्छन्दांसि। लक्षणश्च बहूनां गुरुलघुविन्यासप्रकाराणां सामान्येन वृत्तमिति जातिच्छन्दांसीत्युच्यन्ते।[3] [4]यत्रापि वर्णविन्यासनियमः—यथा गीत्यार्याचूलिकार्यादीनाञ्च प्रस्तारे क्रियमाणे एकैको विशेषस्तत्र वृत्तशब्दो मुख्योऽन्यत्र गौण एव। परे पुनः श्लोकाः वर्णविन्यासनियमेन लक्षितत्वाद् वृत्तानि। इतोऽन्यदपि यत्र लक्षणं सामान्येन प्रवृत्तं, यथा पदचतुरूर्ध्वं गायत्र्यादयश्च, तत्रापि जातिशब्दो युक्त एव। यस्मादत्र[5] वर्णसंख्या नियता, तत इह 'लः समुद्रा गण' इति नाश्रीयते ॥

॥ ५ ॥ सममर्धसमं विषमञ्च ॥ २ ॥

तत्र वृत्तं सममर्धसमं विषमञ्चेति त्रिधा भवति। यत्र श्लोके चत्वारोऽपि पादा वर्णसंख्यया गुरुलघुविन्यासेन च समानाः तत् समं वृत्तम्। यत्रार्धमर्धेन समं प्रथमतृतीयौ पादौ परस्परसमौ द्वितीयचतुर्थौ परस्परसमौ तदर्धसमम्। आभ्यां विपरीतं विषमम्। द्विधा च विषमार्धसमे भवतः, महाविषमं वितानविषमं, महार्धसमं वितानार्धसमञ्चेति। तत्र पादानामक्षरसंख्यया न्यूनाधिकभावान्महाविषममहार्धसमे भवतः। समाक्षरसंख्यानां तु पादानां [56] गुरुलघुमात्रवैषम्येन[6] विन्यास—वितानविषमवितानार्धसमे।

तत्र वितानाभिप्रायेणाह—

॥ ५ ॥ समं तावत्कृत्वः कृतमर्धसमम् ॥ ३ ॥

समवृत्तानां संख्यां तावत्कृत्वः कुर्यात्। समवृत्तसंख्ययैव गुणयेत् सार्धसमवृत्तानां संख्या।

तद्यथा—एकाक्षरस्य छन्दसः द्वे समवृत्ते इति स्थितमष्टमेऽध्याये। द्वयोस्तावत् कृत्वःकरणात् चत्वारि भवन्ति ॥

॥ ५ ॥ विषमञ्च ॥ ४ ॥

पुनस्तान्यपि तावत्कृत्वः कुर्यात्। तावन्ति विषमवृत्तानि। चत्वार्यपि तावत्कृत्वः कृतानि चतुर्गुणितानि षोडश भवन्ति ॥

(1) M omits this *sūtra* and the following sentence of the Commentary. (2) A · प्रवृत्त। (3) A & M · चोच्यन्ते। (4) A & M तत्रापि। (5) M · तस्मात्। (6) M · वैषम्यमात्रेण।

॥ ५ ॥ राश्यूनः ॥ ५ ॥

तावत्कृत्वः कृत्वा च सर्वं राशिना 'एकेन' हीनमेव संख्या भवति, न सर्वम्। तेन द्वयोर्द्विरभ्यासात् यानि चत्वारि तेभ्योऽधिकं राशिमपनयेत्। द्वे अवशिष्येते। तेनैकाक्षरस्य छन्दसो द्वे अर्धसमे। तथा चतुर्णां चतुष्करणाद् यानि षोडश तेभ्यश्चतुष्कं राशिमपनयेत्। द्वादशावशिष्यन्ते। तेनैकाक्षरस्य विषमाणि द्वादश। एवमन्येष्वपि छन्दःसु समवृत्तानि। समवृत्तानि तावत्कृत्वः कृत्वैकं राशिमपनयेत्। तावन्त्यर्धसमानि। अर्धसमवृत्तान्येव तावत्कृत्वः कृत्वैकं राशिमपनयेत्। तावन्ति विषमाणि। यदा पुनः समानि तावत्कृत्वः कृत्वा राशिना नापनीयन्ते तदा समार्धसमानां सर्वेषां मिलितानां संख्या। अत्रैव पूर्वस्यैव राशेस्त्यागे उत्तरस्य चात्यागे विषमार्धसमानां संख्या।[9] यथा पादाकुलकानाम्॥

[57] ॥ ५ ॥ ग्लिति समानी ॥ ६ ॥

इदानीं समवृत्तान्युच्यन्ते। सर्वेषु छन्दःसु युग्मसंख्येषु चतुरक्षरषडक्षरप्रभृतिषु गुरुर्लघुः पुनर्गुरुः पुनर्लघुरित्यादि छन्दसोऽक्षरसंख्याऽऽसमाप्तेरावृत्तौ समानी नाम वृत्तं भवति। सा लघू गौ स्वरावीति केचित्। इतिशब्दः प्रकारावृत्त्यर्थः। 'पादश्चतुर्भागः' इति न विस्मर्तव्यम्। तत्र गायत्री समानी—अर्थ-सम्पदोऽत्र सन्ति किं समा न। धर्मकाममोक्षसिद्धयोऽर्थजा हि॥ अत्र समानीति सामान्यायां सत्यामपि संज्ञायां क्वचिद्विशेषसंज्ञाऽप्यस्ति। तद्यथा—उष्णिहि समानी विभूतिः। जगत्यां विभावरी वसन्तचरी चामरी च। अतिजगत्यां हयप्लुता, अतिशक्वर्यां शुभमित्येका। अभिकृतौ दीपमालिकेति॥

॥ ५ ॥ ल्गिति प्रमाणी ॥ ७ ॥

लघुर्गुरुः पुनर्लघुः पुनर्गुरुरिति लघुपूर्वक्रमा चेदावृत्तिः प्रमाणी नाम वृत्तं भवति। अत्र गायत्री प्रमाणी—गुणावरा च वा कुलप्रमाणयसौ। क्रियैव साध्यते गुणा हि साधवः॥ अत्रापि क्वचित् संज्ञान्तरम्। गभस्तिमालिकेति॥

॥ ५ ॥ वितानमन्यत् ॥ ८ ॥

आभ्यां समानीप्रमाणीभ्यामन्यत् सर्वं वृत्तजातं वितानसंज्ञं वेदितव्यम्। अन्यत्र महाविषममहार्धसमेभ्यो वितानमिति सामान्यायां सत्यामपि संज्ञायां, केषाञ्चिद्विशेषसंज्ञाऽप्यस्ति। तथा सर्वेषूक्तेषु छन्दःसु समवृत्तानि वितानोदाहरणान्युच्यन्ते। अत्रोक्ते श्रीर्नामाद्यं वृत्तम्—या श्रीः। सा स्तात्॥ अथात्युक्ते स्त्री नामाद्यं वृत्तं पद्यं वा—स्त्रीणां मुख्या। पद्मा पायात्॥ द्वितीयं सुखं—सदा रमा। क्रियात् सुखम्॥ अथ मध्ये आद्यानि चत्वारि वृत्तानि क्रमा-[58]-न्नारी मदोदन्मृगी प्रवरश्च—का नारी लोकेऽस्ति। श्रीतुल्या रूपाद्यैः॥ रमायाः प्रसादे। न किं स्यान्मदीयम्॥ श्रीर्मृगी चञ्चला। लभ्यते सद्गुणैः॥ कमलास्तवनात्। किमिहाप्रवरम्॥ जननीति केचित्।

अथ प्रतिष्ठायामाद्यानि सप्तवृत्तानि। कन्या क्रीडा समृद्धिः सुमतिः श्रीमल्लिका जया सुमुखी च— नीतिं हित्वा[10] प्राप्ता लक्ष्मीः। कान्ते भोग्या कन्यैवान्यैः॥ अपि क्रीडा कुरुतेऽपि। विना निद्रां कृत्वा

(7) M : संख्यायाम्। (8) M · अन्य। (9) M omits this sentence. (10) S . भित्वा।

लक्ष्मीः॥ श्रीसमृद्धिः केरलादौ। कैरलब्धा[11] नीतिमार्गाः॥ सततं श्रीरचला स्यात्। सुमतिश्चेत्तदुपाये॥ श्रीमल्लिकामालां गले। बद्धा गुणैः कुर्यात् सदा॥ नयाच्छ्रियो जया मताः। नयात् क्रिया फलोचिताः॥ प्रमाणयेषा प्रसङ्गादुक्ता[12]। किं बहुना यस्य नयाः। तस्य सदा श्रीः सुमुखी॥

अथ सुप्रतिष्ठायां त्रयोदश वृत्तम्। उदाहरणानि—वारेण भृगोः नन्दा सह चेत्। सर्वेष्वपि सा कार्येषु शुभा॥ तृतीयं प्रीतिः—सौम्यवारेण स्याद्यदा भद्रा। सर्वकार्येषु प्रीतिरेव स्यात्॥ चतुर्थं घनपंक्तिः—जयया सार्धं कुजवारश्चेत्। अतिसौख्यानां घनपङ्क्तिः सा॥ षष्ठं—सदा तु रिक्ता दिनेशसूनौ। निहन्ति दोषाननुक्रमेण॥ सप्तमम्—या खलु पूर्णा स्याद् गुरुवारे। सा फलपङ्क्तिं कर्मसु सूते। दशमम्—अभिजिति यश्चरति शुभम्। शुभनियतिस्तदभिमुखी॥ एकादशम्—एवमादिके सर्वाणक्रिया। यातना श्रियो वागुरेव सा॥

एवमुक्तादिषु समवृत्तानि। तान्येवैकैकोदाहरणानि च विशेषाभिः[13] संज्ञाभिः सहोक्तानि। गायत्र्यादिषु वक्ष्यन्ते विषमार्धसमानि च। अत्राद्यद्वितीयतृतीयचतुर्थपञ्चमादि प्रस्तारापेक्षया नष्टप्रत्ययेन बोद्धव्यम्। अथेदानीं वितानसंज्ञानामेव केषाञ्चित्तदा-[59]-नुष्टुभानां समविषमार्धसमाना साधारणलक्षणे, साधारण्यः संज्ञाः प्रक्रियन्ते। तानि च सङ्कीर्णान्युच्यन्ते॥

॥ ५ ॥ पादस्यानुष्टुब्वक्त्रम् ॥ ९ ॥

पादस्येति चानुष्टुबिति च वक्त्रमिति चाधिकारः। तेन वक्ष्यमाणलक्षणं पादस्य।[14] छन्दश्चानुष्टुप् वक्त्रं वक्त्रसंज्ञकं वेदितव्यम्॥

॥ ५ ॥ न प्रथमात् स्नौ ॥ १० ॥

अस्मिन्ननुष्टुब्धिकारे सर्वस्य पादस्य प्रथमाक्षरादूर्ध्वं स्नौ गणौ न कर्तव्यौ॥

॥ ५ ॥ वाऽन्यत् ॥ ११ ॥

स्नाभ्यामन्यन्मयरतजभादि[15] पदकं प्रथमाक्षरादूर्ध्वं विकल्पेन भवतीति। किमर्थमिदम्? सिद्ध एव विकल्पः। अन्यस्याप्रतिषेधात् युगपत् प्रयोगस्यासम्भवाच्च। तत्र तर्हि व्यवस्थयाऽयं विकल्पः स्यात्? तथाहि यस्य पादस्य चतुर्थादक्षरादूर्ध्वं[16] यगणः कृतः तस्य प्रथमाक्षरादूर्ध्वं षडपि गणा भवन्ति। यस्य चतुर्थान्मगणस्तगणो वा तस्य प्रथमाद्रगण एव नान्यः। यस्य जगण[17]स्तस्य प्रथमाद्रगणो नित्यं न भवति। यस्य परिशिष्टा[18]श्चत्वारः रसमनाः प्रथमात्त एव गणाः प्रयोक्तव्याः। यैश्चतुर्थमक्षरं गुरु स्यात् तैः सगणस्य निषिद्धत्वात् मयरा एव। संग्रहश्लोकः—

मगणे तगणे न स्याज्जगणे सर्वदा न रः।
यगणे षडपि ज्ञेयाः शिष्टेषु मयरास्त्रयः॥

प्राक् पदचतुर्ष्वादर्यं न्यायं सर्वत्रोन्नेयः॥

(11) M केरलाय। (12) A omits प्रसङ्गादुक्ता। (13) A विशेषाभिसंज्ञाभि (14) A पादस्य। (15) A adds नग। (16) A जय। (17) A जय। (18) M उपदिष्टा।

## ॥ ५ ॥ यश्चतुर्थात् ॥ १२ ॥

वक्त्रमित्यनुवर्तते। पादस्य चतुर्थादक्षरादूर्ध्वं यगणः कर्तव्यः। तद्वृत्तं [60] वक्त्रम्। तत्र समवृत्तम्—वक्त्रं प्रधानमङ्गानां नेत्रं प्रधानमस्यापि। सामुद्रवीक्षणे तस्मात् मुख्यं मुखं च नेत्रञ्च॥

अथार्धसमम्—त्रिगम्भीरस्त्रिविस्तीर्णः सूक्ष्मः पञ्चसु षड्दीर्घः। चतुर्ह्रस्वो दशोन्नतो[19] रक्तश्चाष्टसु राजा स्यात्॥

अथ विषमवक्त्रम्—नाभिः स्वरश्च[20] सत्त्वञ्च गम्भीराणि यथायोगम्। प्रशस्तञ्च विशालत्वं वक्षश्चक्षोललाटेषु।[21]

## ॥ ५ ॥ पथ्या युजो ज् ॥ १३ ॥

पादस्य द्वितीयस्य चतुर्थस्य चतुर्थादक्षराज्जगणश्चेत् तदनुष्टुप् पथ्या नाम भवति। अयुग्मयोस्तु पादयोरविशेषादष्टावपि गणाश्चतुर्थाद्भवन्ति। तेषु भयरसाश्चत्वारो गुर्वन्तास्तजभनाश्चत्वारो लघ्वन्ताः। न ते युगपद्युग्मयोर्भवन्ति। तथात्वे 'सर्वत सैतवस्य' (V.17) इति संज्ञान्तरस्य वक्ष्यमाणत्वात्। तेन यदि प्रथमे पादे लघ्वन्ताः कृतास्तृतीये गुर्वन्ताः स्युः। अथ तृतीये लघ्वन्ताः प्रथमे गुर्वन्ताः स्युः। गुर्वन्तास्तु युगपदेव उभयत्र भवन्ति। तत्र यगणेन नाद्रियते। तत्र विषमवृत्तत्वासम्भवादर्धसमा पथ्या यथा—नखान्यङ्गुलिपर्वाणि त्वग्दन्ता मूर्धजास्तथा। इयं पञ्चतरोराङ्गे सूक्ष्मा[22] पथ्यार्थदर्शिनो॥

चतुर्थान्मगणे कृते षष्ठाक्षरादि पृथक्पदं कर्तव्यम्। तगणे[23] तु पञ्चमाक्षरादि। आभ्यां विषमा पथ्या—दीर्घाणि जिह्वानासाक्षिहनु[24]बाहुस्तनान्तरम्। ह्रस्वं विदुर्जङ्घाद्वयं पृष्ठलिङ्गं शिरोऽस्थि च॥

चतुर्थाद्रगणे भगणे वा[25] कृते पञ्चमाक्षरादि पृथक्पदं स्यात्। आभ्यां विषमा यथा—उन्नतानि घ्राण-वक्त्रगुल्फमध्ये कृकाटिका। वक्षः कक्षौ जत्रुनखाः पादपृष्ठं तथोदरम्॥

चतुर्थाद्गगणे कृतेऽपि पञ्चमाक्षरादि पृथक्पदं न स्यादपि[26] [61] प्रथमाद्रगणः कृतः। तद्यथा—स्तनेषु तालुन्यधरे जिह्वायां नयनान्तयोः इति।

चतुर्थात् सगणे कृते पदं पञ्चमाक्षरादि पृथगेव स्यात्। तद्यथा—पाणयोस्तले पदयोरिव गुह्ये चेच्छन्ति रक्तताम्। इति च।

तदेव श्लोकः —

> षष्ठाक्षरादि मगणे कृते कार्यं पृथक् पदम्।
> शेषे पञ्चमवर्णादि विहाय नजयान् गणान्॥

इति। एषः पृथक्पदकरणन्यायो विपुलास्वपि चावदितव्यः। अदश्च न्यायो 'धीः श्रीः स्त्री म्' (I.1) इत्यत्र धीरिति पृथक्करणादेव सिद्धः। तस्यान्यत्रोपयोगाभावात्।

(19) A : दशोन्नतेषु। (20) A : विस्तारः : S स्वरः। (21) A : ललाटेषु। (22) A drops सूक्ष्मा।
(23) M : तगणे। (24) M : जानु। (25) M omits भगणे वा। (26) M adds यदि : A reads यदि in place of अपि।

## ॥ ५ ॥ विपरीतैकीयम् ॥ १४ ॥

विपरीतैव पथ्यैन्यैकीयं मतम्। तेन पूर्वोक्तमयुक्पादलक्षणं युजोरयुजोर्युक्पादलक्षण', संज्ञाऽपि विपरीतेति।

अर्धसमं यथा—अङ्ग' रक्तममांसलं चिपिटं वा शिरालं वा। यत्तद्दुष्टमतस्तनुर्विपरीतोत्तरा पथ्या॥

अथ विषमं—त्वक्स्नेहे शयनं सुखं सौभाग्यं नयनस्नेहे। थ'सस्नेहे सुभोजन स्वर' सौख्यं शिर'स्नेहे॥

## ॥ ५ ॥ चपलाऽयुजो न् ॥ १५ ॥

अयुग्मयोः पादयोश्चतुर्थान्नगण' स्यात्। चपला नाम वृत्तम्।

अर्धसमं यथा—शङ्खा[27]तपत्रशिबिकाहयहस्तिसमा रेखाः। हस्त्याः श्रियं दृढतरं चपलामपि कुर्वन्ति॥

अथ विषमं—मणिबन्धादुदयते यन्मध्यमा[28]ङ्गुलिरेखा। न तं जहाति पुरुषं स्त्रियं वा चपलाऽपि श्रीः॥

अत्र युजो युगपल्लघ्वन्ता न कार्याः। तथात्वे 'सर्वतः सैतवस्य' (V.17) इति संज्ञान्तरस्य वक्ष्यमाणत्वात्॥

## [ 62 ] ॥ ५ ॥ विपुला युग्लसप्तमः ॥ १६ ॥

युक्पादो लघुसप्तमश्चेत् विपुला नाम स्यात्। अयुक् तु वक्त्रस्यैव[29]।

अर्धसमं यथा—अस्वेदकौ मृदू सोष्णावूर्ध्वरेखाङ्किततलौ[30]। पादौ नरस्य नार्या वा लक्ष्मीं विधत्तो विपुलाम्॥

अथ विषमं यथा—हस्त्याः पद्माश्च शस्त्राभाः रेखाः कुर्वन्ति धनिनम्। नारीं नरं तु सेनान्यं मीनपुच्छनिभाः यतिम्॥

## ॥ ५ ॥ सर्वतः सैतवस्य ॥ १७ ॥

सर्वेषु पादेषु सप्तमाक्षरं लघु भवति विपुलायाः सैतवस्याचार्यस्य मतेन। तत्र समं यथा—सैतवस्य पद्मस्थली स्त्री च पूजितलक्षणा। गन्तृ[31]वर्गमिमं सदा रक्षतो विपुलापद'॥

अर्धसमं—यल्लक्षण' पुंसि शुभं प्रायशो योषिताञ्च तत्। यत्राकृतिस्तत्र गुणाः सन्ति दोषा दुराकृतौ॥

अथ विषमं—शस्तं गात्रमरोमशं नाणु न स्थूलसक्थकम्। पीनौ वृत्तौ[32]स्तनौ घनावूरू च सनितम्बकौ॥ लसप्तम इत्युक्तत्वात् सर्वेऽपि लघ्वन्ताः सर्वेष्वपि तत्र[33] चतुर्थाद्भवन्ति॥

## ॥ ५ ॥ भ्रौ न्तौ च ॥ १८ ॥

चतुर्थादित्येव। चकारात् 'सर्वत' इत्यनुकृष्यते। चतुर्थाद्भरनताश्च गणाः सर्वेषु पादेषु भवन्ति विपुलायाः। यथागणञ्च संज्ञा—भश्चेद्भविपुला, रश्चेद्रविपुला, नश्चेन्नविपुला, तश्चेत्तविपुला।[34]

(27) A : संख्या। (28) A : मध्यमा। (29) A omits अयुक् तु वक्त्रस्यैव, and reads ' युक्पथ्यायामेव in its place. (30) A : कृतलौ ; M : करतलौ ; S : विवलौ। (31) A : गन्तु ; M : गन्त्र। (32) M omits वृत्तौ। (33) M adds here भविपुला। (34) M omits the last two names.

तत्र भविपुला समा—प्रदक्षिणावर्तबिला[35] गभीरमध्या विपुला। सरोमराजी त्रिवली वधूनां नाभिः शुभदा॥

अर्धसमं—उपैति मध्यं करभाद् या तर्जनीमध्यमयोः। महद्धनत्वायुरसौ रेखान्तमालेव च यद्॥

[63] अथ विषमं—अङ्गुष्ठमूले प्रगता रेखा स्वविश्वासनशात्। दिशत्यपि सा दुहितृः स्त्रीणां नराणां च करे॥

अथ रविपुला समा—पदयुग्मे गूढगुल्फे करयुग्मे गूढसन्धौ। घनदीर्घे स्वङ्गुलिके विपुला श्रीर्देहिनो स्यात्॥

अथार्धसमं—गृहजन्या वाऽऽयतता वा रेखाङ्गुष्ठे पर्वजा वा। धान्यवासो भक्ष्यभोज्यं स्त्रीपुंसाभ्यां ददाति च॥

अथ विषमं[36]—रोमैकैकं कूपकेषु राज्ञां द्वे द्वे पण्डितानाम्। त्र्यादीनि त्वा स्त्रीपुंसयोश्च तथा वैरैश्चे-तराणु:॥

अथ नविपुला समा—रामा मुखेन विपुला घोणेन किंचिन्नता। स्निग्धच्छविश्च[37] वपुषा लावण्यभाक् च सुभगा॥

अथार्धसमं—स्त्री वाचाला कलहकृत् पृथ्वी दीर्घा कुलरिपुः। धनं हृत्वा हरति सा कुम्भाकारञ्च जठरम्॥

अथ विषमं—लम्बः कुक्षिः श्वशुरहृत् ललाटं देवरे रिपुः। स्त्रीणां स्फिजौ पतिरिपू दीर्घा स्त्री भर्तृशुभदत्॥[38]

अथ तविपुला समा—उत्सेधवानूर्ध्वोष्ठको[39] यस्याः कचाः श्यामकाः। सा वर्धयेन्नित्यं कलिं स्यात्तस्करी स्थूलैः रदैः॥

अथार्धसमं—चलेऽक्षिणी श्यावप्रभे दौःशीलभाक् पिङ्गेऽपि च। वधूस्तथा स्यात् केकये शुष्के करे दुःखाधिका॥

अथ विषमं—या स्त्री वने[40] क्रीडारता मार्गे कटेः संसक्तदृक्। नर्तांसका याति द्रुतं मयूरवोन्मुखा च सा॥

अस्मिन् सङ्कीर्णप्रकरणे सर्वत्र ग्लावित्यनुवर्तते। तेन पादानामाद्यमन्त्यञ्चाक्षरं गुरु वा लघु वा यथाकामं स्यान्मध्ये तु यथानियममिति सङ्कीर्णप्रकरणम्॥

[64] अथ महाविषमाणि[41]—

(35) M reads शिरा in place of °बिला। (36) M omits the following illustrative verse except for the last word, obviously due to haplology in the word स्त्रीपुंसयोश्च। (37) M adds here विपुला। (38) A : °भाग् ; M °भृत्। (39) M : °र्ध्वकाय। (40) A : जने। (41) A drops this sentence

॥ ५ ॥ प्रतिपादञ्चतुर्वृद्धया पदचतुरूर्ध्वम् ॥ १६ ॥

अनुष्टुबित्यनुवर्तते। प्रतिपादं चतुर्भिरक्षरैर्वृद्धया पदचतुरूर्ध्वं नाम। आद्यः पादोऽष्टाक्षर[42]श्चतुर्वृद्धया द्वितीयो द्वादशाक्षरस्तृतीयः षोडशाक्षरश्चतुर्थो विंशत्यक्षरः। अत्र विशेषवचनाभावाद् ग्लावित्यधिकारेण गुरुलघुवर्णावुपतिष्ठेते[43]। तयोश्च यथाकाम[44] विन्यासः।

केचित्तु आर्यायामिव गणन्यविन्यासमाहुः। अनुक्तविशेषाणामार्याप्रकृतिरनुक्तसंख्यानां समाक्षरता[45], अनुक्तयतीनां पादान्ते यतिर्मध्ये च यथाशोभमिति हि छन्दसो न्याय —

करपदतलं पीनं
मध्या नता भ्रूर्वलिषु विषमा वा।
छिन्ना[46] ललाटरेखा छिन्नाभा नासिका यदि वा
यस्यासौ पदचतुरूर्ध्वमपि न हित्वा[47] चलत्यगम्यां स्त्रीम्॥

अत्र पादानां व्यत्यासोऽप्येष्यते। तेनेदं चतुर्विंशतिधा भवति। न्यासः —

अद्वपवि, अद्वविप, अपद्वावि, अपविद्व, अविद्वप, अविपद्व एवं षट्। द्वअपवि, द्वअविप, द्वपअवि, द्वपविअ, द्वविअप द्वविपअ एवं षट्। पअद्वावि, पअविद्व, पद्वअवि पद्वविअ पविअद्व पविद्वअ, एवं षट्। विअद्वप, विअपद्व, विद्वअप विद्वपअ विपअद्व, विपद्वअ एव षट्। एव चतुर्विंशतिधा भेदोऽस्य॥[48]

॥ ५ ॥ गावन्त आपीडः ॥ २० ॥

एषामेव पादानामन्ते गुरू द्वौ चेदापीडो नाम [65] वृत्तं पदचतुरूर्ध्वं भवति। गावन्त इति वचनमन्येषां लघुत्वार्थं गावन्त एवेत्येतत् पदं व्याख्येयम्—

उपपति परिमृश्यापरकुलयुवतिरपि वतसे। यदि हनुतलभुवि चुबुकभुवि विमलं[49] प्रभवति वसनजमय[50] यदि करतलमपि पीतम्॥

इदमपि चतुर्विंशतिधा॥

॥ ५ ॥ गावादौ चेत् प्रत्यापीडः ॥ २१ ॥

आदौ चेत् पादानां गुरू द्वौ प्रत्यापीडः —

अङ्गुष्ठमतिचरति तर्जन्यपि-[हित][51]-मिव यदि वत[52]। ताः स्वस्त्रिय इव पतिजनमभिरमयितुमापीडमुपनिदधति[53] युवतय उपपतिशिरसि॥

इदमपि चतुर्विंशतिधा॥

(42) A adds तस्य। (43) M : गुरुलघुवर्णा उपतिष्ठन्ते। (44) M : यथाक्रमं। (45) A : महत्साक्षरा। (46) A adds ततश्च before this ; M : भिन्ना। (47) M : वाचा ; S : भित्वा। (48) A & S both omit these permutations We have rearranged the order found in M and T according to mathematical convention. (49) A : निमर्नं ; S : विमानं। (50) A : वासनज॰ ; (51) A : lacuna [ ] (52) A : पति ; S : यति। (53) A : आपीडकमुपनिदधाति।

॥ ५ ॥ प्रत्यापीडो गावादौ च ॥ २२ ॥

गावादावन्ते च यदा तदाऽपि प्रत्यापीड एव—यासौ न भुवमनामा[54]पदा स्पृशति न च पदकनिष्ठा। सा त्वानवरतमु[55]पपतिजनमनु[56]प्रत्यापीडं वरगुपनिदधति[57] युवतय उपकचबन्धा॥ इदमपि तथा॥

अथ पदचतुरूर्ध्वपादव्यत्यासजानामेव वृत्तानां वृत्तत्रयस्य संज्ञान्तरम्—

॥ ५ ॥ प्रथमविपर्यासे मञ्जरीलवल्यमृतधाराः ॥ २३ ॥

प्रथमस्य पादस्य विपर्यासे अन्यैः पादैः मञ्जरी लवल्यमृतधारा च पदचतुरूर्ध्वं भवति। द्वितीयेन व्यत्यासे मञ्जरी। तृतीयेन व्यत्यासे लवली। चतुर्थेन व्यत्यासेऽमृतधारा—

यदि पतिरतिजडम[58]तिरिह रामा रम्यविदग्धा च। पल्लवकुलात्[59] सा स्त्री सम्प्रच्यवते ध्रुवं स्वस्माच्छद[60]नैवृताऽप्यनेकैर्कदलिका[61] मञ्जरीव कोशदलात्॥

अथापीडे—प्रकटयति दशति[62]मनुहसनरेतावपि फलततिमिह[63] लवली या।[64] भवति जगति सा स्त्री पथि परिमितजल[65]सरिदिव बहुविट[66]जनलङ्घ्या॥

मुखमनत[67]दशनमतिकृशहनु हलमिव दीर्घं
यदि भवति कलहनिरता स्त्री।
पतिमतिचरति च वचनममृतधारा-
सममपि न शृणोति॥

इति पदचतुरूर्ध्वं -[66]- प्रकरणम्॥

॥ ५ ॥ उदगतामेकतः स्जौ स्लौ न्सौ ज्गौ भ्नौ ज्लौ ग् स्जौ स्जौ ग् ॥ २४ ॥

सजसा लघुश्च नसजा गुरुश्चैकतः। एकतोऽर्धमित्यर्थ भनजा लघुर्गुरुश्च सजौ द्विकौ गुरुश्चार्धमित्यर्धशो विभज्योद्गता पठतीत्यन्वयः। अर्धशो विभागादयुग्मयोः पादयोरविश्रम्यैकत्वेनैव द्रुतं पठितव्यम्। तत्र स्जौ स्लावित्याद्यः पादः। न्सौ ज्गाविति द्वितीयः। भ्नौ ज्लौ गिति तृतीयः पादः। स्जौ स्जौ गिति चतुर्थः पादः। लघोर्गुरोश्च सूत्रे पृथक्करणात् पादसमाप्तिः। अन्यत्राप्येवं सूत्रमध्ये लघुगुरुदर्शने पादसमाप्तिर्ज्ञेया।

नन्वेकत्वेन[68]चेत् पाठः किं पादव्यवस्थया? उच्यते—एकेन शब्देन मा पादौ[69] सन्धयिष्यतामिति। एतेनान्यत्र पादान्ते विश्रम्य पाठ उक्तः—

धनिनां भवन्ति सुकृतानि धनविरहिता [67] सदाऽस्थिरा।
मुक्तिरपि धनिषु किं बहुना सकलं धनेन[70] किमु कीर्तिरुद्गता॥

(54) A : न भवभनामा। (55) A : आसरत। (56) A : °मनुव। (57) A : प्रत्यापीड वमुपनिदधति°। (58) A : जन। (59) A : वनितकुलात्। (60) A स्मन्दने°; S : °च्छादने। (61) A : कदलिनी। (62) A : दशतिमनु°। (63) A : °मिव ; S °मिह च। (64) A : लवलीनिवा। (65) A : जलज°। (66) A : विरव°। (67) A : मुखमनभ°। (68) A : ननु च एकत्वेन। (69) A : मारो instead of मा पादौ। (70) A : सकलउदयेन ; S : सकलधनेन।

## ॥ ५ ॥ तृतीयस्य सौरभकं र्नौ भ्गौ ॥ २५ ॥

उद्गताया एव तृतीयस्य पादस्य स्थाने रनभगाः स्युः सौरभकं नाम वृत्तम्—पवना' किरन्ति कुसुमानि समयविकचानि शाखिनाम्। तन्वते च दिवि सौरभकं धनिनां यशांसि[71] विविधाऽर्हणास्तथा[72]॥

## ॥ ५ ॥ ललितं नौ सौ ॥ २६ ॥

तृतीयस्यैव पादस्य स्थाने नौ सौ च स्युर्ललितं नाम वृत्तम्—ललितध्वनिः पिकरुतेन नवमधुरसैर्नगो मधु। सुरभिरपि[73] सुरभिभि कुसुमैरलिभि[74]स्तथैव विधिनोपजीवति॥[75]

## ॥ ५ ॥ उपस्थितप्रचुपितं पृथगाद्यं म्सौ ज्भौ गौ स्नौ ज्रौ ग् नौ स् नौ न्जौ य् ॥ २७ ॥

मसजभा गुरू च द्वौ प्रथमः पादः। सनजरा गुरुश्च द्वितीयः। नौ द्वौ सश्च तृतीयः। स इति सूत्रे पृथक्करणात् पादसमाप्तिः[76]। नास्त्रयो जयौ च चतुर्थः। तदेतदुपस्थितप्रचुपितं नाम वृत्तम्। अत्राद्यं पादं पृथक् पठन्त्यन्यत् पादत्रयं सहैव—

कामो यातु धनं व्यपैतु तिष्ठतु कीर्तिः
धनिनां धनमपि ते समेति भूयः।
श्रयति हि पुनरपि तत्
प्रचुपितपदमुदकमुपस्थितपूर्वम्॥

## ॥ ५ ॥ वर्धमानं तृतीये नौ स्नौ न्सौ ॥ २८ ॥

अस्यैव तृतीये पादे नौ द्वौ सश्च पुनर्नौ द्वौ सश्च[77] वर्धमानं नाम वृत्तम्। अन्यत् पूर्ववत्—

उद्भूतं प्रथमं यशोङ्कुरं[78] धनबीजात्
वितनोति धनफलानि वर्धमानम्।
धनमपि घटयति ढौकितमवतु बहुधनं[79]
[68] गृहशकुनिरिव शकुनिमंघमगृह्यम्॥

## ॥ ५ ॥ शुद्धविराडृषभं त्ज्रः ॥ २९ ॥

तृतीय एव पादे तजराः स्युः शुद्धविराडृषभं नाम वृत्तम्—

इष्ट्वा त्यक्तधनैर्मखैर्हरिं भगवन्तं
तपसा ऋषभम[80]वाप्य वृत्तमग्र्यम्[81]।

(71) A : धनानि। (72) A : विश्वजना जनास्तथा; M & S त्रिविधान्नाहार्यस्तथा। (73) M : शिशुभिरपि। (74) A : धनिभि। (75) A विप्रनोऽपि जीवति। (76) A omits this sentence. (77) A adds स्यु। (78) M उद्भूत क्रियया पुराङ्कुर ; S · क्रियादनाङ्कुर। (79) M · लभ्यति बहुधननिचय। (80) M वृषभ। (81) M & S अग्र्यम्।

तच्छुद्धविराट्पदात् परं[82]
व्रजति पदमजममृतमुज्झितसङ्गः[83] ॥

इति महाविषमप्रकरणम्[84]। अथार्धसमान्यारभ्यन्ते—

॥ ५ ॥ अर्धे ॥ ३० ॥

अधिकारोऽयमाऽध्यायपरिसमाप्तेः। अर्धे लक्षणमधिकृतं वेदितव्यम्। तत्र विधानात्तदर्धसम[85] तावत् ॥

॥ ५ ॥ उपचित्रकं सौ स्लौ ग् भौ भ्गौ ग् ॥ ३१ ॥

सास्त्रयो लघुगुरू चाद्यः पादः भास्त्रयो गुरू च द्वावन्यः।[86] तदेतदाद्यमर्धम्।[87] द्वितीयमप्यर्धमीदृशमेव।[88] तदेतदुपचित्रकं नाम वृत्तम्—

चतुरन्तमहीपतिना पतिः[89]
नीतमना[90] मृगयाव्यसनाय।
उपचित्रकमेत्य गिरेर्वनं[91]
चिन्तयति स्म नृपः किल कश्चित् ॥[92]

एतौ त्रैष्टुभयोर्द्वयोः समवृत्तयोः पादौ महताऽवेकमर्धसमवृत्तम्। अयं न्यायोऽन्यत्रापि स्यात्। तेनान्येऽपि त्रैष्टुभाना वाऽन्यवृत्तानां समाक्षरसंख्या पादा द्वौ द्वावेकभूयं भूत्वा बहून्यर्धसमानि सम्पद्यन्ते। तेषां समं तावत्कृत्व कृतमर्धसममिति सङ्ख्योक्ता। अथार्धसमानि[93]—

॥ ५ ॥ द्रुतमध्या भौ भ्गौ ग् न्जौ ज्यौ ॥ ३२ ॥

भास्त्रयो गौ चाद्यः पादः नो जौ द्वौ यश्चान्यः द्रुतमध्या—

प्रान्तगतस्य विपक्षकदम्बं प्रतिपदमन्तरा[94]व्रजतो मे।
चित्तमिदं हरति द्रुमराजी[95] [69] विधुरिव पूर्णनदी द्रुतमध्या ॥

नलिनञ्च। एषा सज्ञान्तरार्थं पुनरुपादानम् ॥

॥ ५ ॥ वेगवती सौ स्गौ भौ भ्गौ ग् ॥ ३३ ॥

सास्त्रयो गुरुश्चाद्यः पादः भास्त्रयो गौ च द्वावन्यः वेगवती[96]—

अपराध्यति किं नगरश्रीः सदमिनामिव मत्प्रदृशाणाम्।
नियमं विभिनत्ति[97] घनश्रीर्वेगवतीव नदी मृदुसेतुम् ॥

आपातलिका वा ॥

(82) M परं। (83) M· परमजममृतमु··· ·तसङ्ग। (84) A omits the sentence ; M reads this after V. 30 (85) A तत्र विनातार्धसमं। (86) A द्वावन्त्य। (87) M· तदेतदर्धसममस्य ; S : तदेतदर्धसमम्। अस्य (88) M· तादृशमेव। (89) M· चतुरन्तमहीपतिनाय ; S· चतुरन्तमहीपतिनिपात।(90) A· दत्तमनो। (91) A· वनम्। (92) A कश्चित्। (93) A· अथ महाविषमार्धसमानि ; M· अर्धसममहार्धसमानि। (94) M प्रतिमन्तरूप। (95) A· धूतराजी। (96) M adds नाम। (97) M· नियमाद्विहिनस्ति ; S नियम विहिनस्ति।

॥ ५ ॥ भद्रविराट् तजौ गौ ममौ जगौ ग् ॥ ३४ ॥

तजरा गुरुश्चाद्यः पादः मसजा गौ च द्वावन्यो भद्रविराट्—

वेश्मानि[98] समानि नो गुहामिग्व्यानानि वनेऽप्यत्यकानाम्।[99]

कस्तिष्ठति खर्वेऽरिमन्नो राजा भद्रविराट् कुलाभिजात ॥[100]

औपच्छन्दसिकं वा ॥[101]

॥ ५ ॥ केतुमती सजौ सगौ भ्रौ नगौ ग् ॥ ३५ ॥

सजसा गुरुश्चाद्यो भरना गौ च द्वावन्यः केतुमती—

मनुजां शतैर्मकरकेतोः संग्रथिता शिलीमुखनतानाम्।

अटवी निरस्यति धृतिर्वा केतुमती चमूरिव भरस्य ॥[102]

॥ ५ ॥ आख्यानकी[103] तौ जगौ ग् जतौ जगौ ग् ॥ ३६ ॥

मध्यत्वात् तौ जो गौ च द्वावाद्यो जतजा गौ च द्वावन्य आख्यानकी। व्यत्यस्तैवेयमाख्यानकी[104]—

एषा मयूरावलिरुच्चकेका तते [105] कलापैर्विदिनस्य लक्ष्मीम्।

आख्यानकी चाङयति[106] प्रवक्तुं निजेषु सर्वोऽपि हि पक्षपाती ॥

॥ ५ ॥ विपरीताख्यानकी जतौ जगौ ग् तौ जगौ ग् ॥ ३७ ॥

जतजा गौ च द्वावाद्यस्तौ जो गौ च द्वावन्यः विपरीताख्यानकी—

यदन्यशेषन्न[107]वदत्यपीषद् कामप्रसङ्गेषु विकाममावा।

सुवासिताऽपि प्रमदा विजातिराख्यानकी सा[108] विपरीतपूर्वा ॥

अनयोर्वितानसंज्ञयो[109] -[70]- रुपचित्रकन्यायेन सिद्धयोरपि पुनर्वचनं संज्ञान्तरार्थम् ॥

॥ ५ ॥ हरिणप्लुता सौ स्लौ ग् नभौ भ्रौ ॥ ३८ ॥

सान्त्यो लघुर्गुरुश्चाद्यः[110] नो भौ रश्चान्यो हरिणप्लुता—

इयमुन्नतिरत्र निवासिनामिह भवान् पुरि वा वसतु स्थ्यम्।[111]

इति भूमिरसौ वदतीव मां खगरूतेन महाहरिणप्लुता ॥

(98) A : वर्माणि ; M : मन्दाणि। (99) M : वनैरुपत्यकायाम्। (100) M omits कुलाभिजात। (101) M omits this name ; A reads च in place of वा। (102) A : चमूरिव परस्य ; M : रामभद्रस्य (103) A & M : आख्यानिकी (104) A omits this sentence (105) M : एषां मयूरावलीरुच्चकेकान्तके (106) M : वाचयति (107) M : °शेषभवदन्यविन्दम् (108) M reads : साम्यानकीयं (109) M : °संज्ञयो (110) A reads अन्य- in place of आद्य- here, as also in all other similar places. (111) M : पुरि वस्तयम्

॥ अपरवक्त्रं नौ र्लौ ग् न्जौ ज्रौ ॥ ३९ ॥[112]

नौ द्वौ रो लघुर्गुरुश्चाद्यः नो जौ द्वौ रश्चान्योऽपरवक्त्रम्—

सततमकलकामसम्पदं परमचलं जन ते समाश्रिता।
न पुनरपरवक्त्रमीक्षते कुलजवधूरिव राजकामदा॥

वैतालीयं वा॥

॥ ५ ॥ पुष्पिताग्रा नौ र्यौ ज्ञौ ज्रौ ग् ॥ ४० ॥

नौ द्वौ रयौ चाद्यः पादः। मध्यस्थानीयत्वात् पादसमाप्तिः। नो जौ द्वौ रो गुरुश्चान्यः पुष्पिताग्रा—

कुसुमितशिरसं समाश्रयन्ती धव[113]मतिपल्लवधर्मकं विभाति।
ऋतुसमयगृहीतपुष्पधर्मा व्रततिरियं वनितेव पुष्पिताग्रा॥

औपच्छन्दसिकं वा। अत्र[114] पुष्पिताग्रेत्येतावतैव लक्षणं सिध्यति, शेषस्यापरवक्त्रलक्षणाधिकारादेव सिद्धेः। यथा 'औपच्छन्दसिकमि'त्यत्र (IV 34) तथाऽक्षरविन्यासो नाधिक्रियत[115] इति दर्शयितुं तथा न कृतम्। तेन शिखायां पूर्वविन्यासो नाधीयते[116]॥

॥ ५ ॥ यवमती र्जौ र्जौ ज्रौ ज्रौ ग् ॥ ४१ ॥

रजौ द्विकावाद्यः। मध्यस्थानत्वात् पादसमाप्तिः। जरौ द्विकौ गुरुश्चान्यो[117] यवमती—

व्रीहिणः पुरेषु के नरा[118] यथैव यवान्विताः फलान्विताश्च तद्वदन्।
सन्तु वा पुरेषु सम्पदस्तथापि तपस्यया वनेषु सन्त्यमुत्र लोकाः॥

॥ ५ ॥ शिखैकान्नत्रिंशदेक[119]त्रिंशदन्ते ग् ॥ ४२ ॥

एकान्नत्रिंशदक्षराण्याद्यः पाद एकत्रिंशदक्षराण्यन्त्यः शिखा। अन्ते द्वयोर्गुरुः स्यात्। गुरोरयं नियमो नान्त्यस्य। किमनेन विभागेन? अस्यैव यदि समस्तस्य[120] स्यात् योऽन्त्यस्तत्र गुरुरेवेति। तदा पूर्वत्र लघुर्वा गुरुर्वा स्यात्। [71] न नियमः। यदा तु ग्लावित्यधिकाराद्गुरौ च लघौ च प्राप्ते यो गुरुः सोऽन्त्य एवेति गुरोर्नियमः, तदा[121] पूर्वत्र लघुरेव स्यात्। अन्त्यस्य नियमेऽत्र पादान्त अर्थवत्वेऽ[122]प्यर्धान्ते वैयर्थ्यं स्यात्। गन्त इत्येव सिद्धत्वात्। गुरोस्तु नियमः पादद्वयेऽप्यर्थवान्। तस्माद्गुरोरयं नियमः[123]। अनुक्तविशेषाणामार्याप्रकृतित्वात्। गीतेरार्यागीतेश्चार्धेन प्रयोग इति केचित्—

(112) M drops the *bhāṣya* and the following *sūtra* (V. 40) (113) M : धवम् (114) A omits (115) M : नाधीयते। (116) M & S omit these words beginning from इति (117) A omits श्चान्य (118) A & M : केदारा ; S : ये नरा ; T केनरा (119) M : शिखैकोनत्रिंशत् (120) M : समस्य ; A : °त्यमस्य (121) M यदा (122) M : तु (123) A drops the two succeeding sentences and reads, in its stead : गन्ता द्विःसंख्यो मात्रासमकमित्यत्र नवमादीनां पुनर्लघुत्वनियमादेतस्मैव नियम आश्रित।

इति किलनरपतिररुणमणिगण[124] इव न भुवि तपसि स मतिमकरोद्
अशमयदपि सुतयुवतिसपरिकरधनचयविनिहितखलमतिमखिलाम्[125] ।
पुनरपि पुनरपि धनरुचिमतिशयमतिखलमतिमभिवदति जनं[126]
न तु जनमधिकगुण[127]मुपचितशुममभिभवति न दहति मदनदवशिखा ॥

॥ ५ ॥ खञ्जा महत्ययुजीति[128] ॥ ४३ ॥

महत्येकत्रिंशत्के पादेऽयुजि प्रथमे तृतीये च कृते, एकान्नत्रिंशत्के च युजि खञ्जा नाम। एवं पूर्वश्लोक एव पादविपर्यासेनोदाहार्यः ॥

इति भगवतो यादवप्रकाशस्य कृतौ पिङ्गलनागच्छन्दोविचितिमाष्ये पञ्चमोऽध्यायः ॥



(124) M drops गग (125) M . °सुपरिकर धननिचय नियत खलु मिदिमखिलां (126) M धनरुचिमतिशयनति भवति पुरुषमुपनसं (127) A : अधिगुण° (128) M reads the *sūtra* in a different version in addition to the conventional one : खञ्जा विनियम्य यदि, and drops the *bhāṣya* on it.

# अथ षष्ठोऽध्यायः

## ॥ ६ ॥ यतिविच्छेदः ॥ १ ॥

वितानमन्यदिति वृत्तानां संज्ञोक्ता। तदग्रश्च प्रस्तारादि वक्ष्यते। किं पुनरिदानीमारभ्यते? सत्यामपि वितानमिति सामान्यायां[1] संज्ञायां वैशेषिकसंज्ञा यतिश्चेति। केषाञ्चिदुक्तं प्रस्तारादिलक्षितानामपि पुनर्लक्षणमारभ्यते। प्रथमं तावद् यतेर्लक्षणं कथयति। यतिविच्छेद इति। विच्छेदः पाठवेगस्य यतिः। पठतो[2] मध्येऽन्ते वा यो विलम्ब[3] सा यतिः।

अत्र यत्युपनिषदो नाम भवन्ति। तद्यथा—

यतिः पठद्विलम्बोऽसौ त्यागोऽर्धे सन्धिपाठयोः।
पादान्ते पादमध्ये वा न त्यागः सन्धिपाठयोः[5] ॥
द्रुतं[6] पठन् यथाशास्त्रं [72] मध्येऽन्त्ये यद् विलम्बते[7] ॥

सा यतिः। स च विलम्बोऽर्धान्ते सन्धिपाठत्यागा[8]त्मकः। तेन पूर्वार्धस्यान्ते पाठसन्तानो विच्छेत्तव्यो नाऽन्यत्र। संहिता च न पूर्वार्धान्तस्य शब्दस्योत्तरार्धेन कार्या। यथा—दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा। आचार्यमुपसङ्गम्य राजा वचनमब्रवीत् ॥ इत्यत्र तदाऽऽचार्यमित्यनयोः संहिता न कार्या[9]। तथा—चयवोमचयमदोदैपठमयठलावयठलार्चिता। अम्यादरचयवमुदवादिमुयवमुयठलमथिवता॥ इत्यत्रार्चिताऽम्यादित्यनयोः संहिता न कार्या। अन्यत्र कार्यैव।

अर्धे पादेऽस्य मागे च क्वचित्[10] च स्याद्यतिस्त्रिधा।
त्रिधा यतिश्च शब्दान्तसमासपदमध्यजा ॥

अर्धे अर्धान्ते पादे पादान्ते पादमागे च क्वचित् क्वचिति कचतुष्कादौ यतिः। सा च त्रिधा—शब्दान्तजा, समासमध्यजा पादमध्यजा[11] चेति।

आद्ये स्थाने यतिश्चाद्यो[12] मध्यमे त्वादमध्यमे।
अन्त्ये तिस्रो यथा[13] सन्धिः पादयोः स्यात् परादिवत्[14] ॥

अर्धान्ते शब्दान्ते चैव यतिः[15]। नार्धे द्वे एकेन शब्देन समासेन वा[16] सन्दध्यात्। पादान्ते शब्दान्तजा समासमध्यजा स्यात्। नाऽन्या। नैकेन शब्देन द्वौ सन्दध्यात्।

(1) A : साधारण्यां (2) A : पाठ्य सम्य गस्य च पठन्तो (3) A : वा लम्बो (4) M : पाठविच्छेद (5) A omits this line. (6) M & S : द्रुत (7) A reads the last foot : यद्विलम्बति सा यति (8) M omits त्याग (9) A omits this verse of the *Gītā* and the comments thereon 10) A : स्थानेषु (11) A : शब्दजा (12) M & S : आद्या (13) A : यर्ज° (14) A : परादिवत् 15) A : अर्धशब्दान्तजैव यतिः ; M : अर्धान्ते शब्दान्ते चैव यति (16) A omits समासेन वा

समासमध्यजा यथा—नमो लोकतमोजालच्छिदे परमतेजसे इति। पादभागे तिलोऽपि यतय। पादान्त्यस्य शब्दस्योत्तरपादाद्येन[17] यणादेशसन्धिः स्यात्। स च परस्व पादस्यादिः स्यात्। न पूर्वस्यान्तः। तद्यथा—तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही इति। तथा—स पल्वलोत्तीर्णवराहयूथान्यावासवृक्षोन्मुखबर्हिणानि' (*Raghu.* II 17[a b]) इति।

पादमध्येऽपि परादिरेव यथा—गाढोत्कण्ठां गुरुषु दिवसे-[73]-ष्वेषु गच्छत्सु बाला (*Meghadūta.* II. 23[c]) इति। यथादेशसदृशो[18]ऽपि क्वचिद्यति. परादिन्वश्च। यथा—मातङ्गस्य स्तुतमदजलस्येव भृङ्गाः कपोलमिति।

पूर्वान्तस्त्वन्यसन्धिः स्यात् माग एकाक्षरो न चेत्। अन्तस्तु सन्धिपादान्तशब्दस्योत्तरपादाद्यो न भवति। पूर्वस्य पादस्यान्त्यः स्यान्नोत्तरस्यादि'। सन्धिना च विभक्तस्य शब्दस्य परो भाग एकाक्षरो न स्यात्। यथा—विनायकाय मातङ्गाननाय महते नम'। ब्रह्मादिकीटपर्यन्तं यत्प्रसादवशाः क्रियाः॥ इति।

भागौ पूर्वापरान्तैकवर्णौ[19] चेत् पादमध्यजा यतिः। विभक्तस्य[20] पूर्वापरौ भागौ नैकवर्णौ चेत् पदम[21]ध्येऽपि यतिः स्यात्। यथा—पर्याप्तं तत्र पुत्रीयति महति जन इति।

उपसर्गेऽपि कुर्वीत पादान्तार्धान्तयोर्यतिम्।
यथाशोभं यतिः कार्या[22] सर्ववृत्तेष्वपि स्वयम्[23]॥

उपसर्गेऽपि पद[24]मध्येऽपि क्रियत एव यतिः। यथा—एवं तावद्विरोधादिदमपि तु परिच्छिद्यते देहमात्रम्। इति॥

सर्वत्र यथाशोभं यतिः कर्तव्या। क्वचित् क्वचिदुपदेशः शोभाप्रदर्शनार्थः। क्वचित् संज्ञान्तरार्थः। यथा—मालवर्द्धनकौ चेदिति। क्वचिदस्फुटत्वात्। यथा—ऋषभगजविलसित इति। इति यत्युपनिषदः॥

अथ गायत्र्यादीनां समवृत्तान्युच्यन्ते। उक्तादीनामप्रसिद्धत्वात् प्रस्तारादिभिश्च सिद्धत्वान्नोक्तानि। *तत्र गायत्र्याम्—*

## ॥ ६ ॥ तनुमध्या त्यौ[25] ॥ २ ॥

पदस्येत्यनुवर्तते। तयौ गणौ यदि[26] क्रमात् पादस्यावयवौ तद्वृत्तं तनुमध्या[27] नाम। अन्ये तादृशास्त्रयः पादा द्रष्टव्याः—

रामां तनुमध्यां गच्छेदनुवृत्ताम्[28]।
यो जीवितुमिच्छेद्भर्ता शतमायुः[29]॥

(17) M : °पादान्तेन (18) A : यथादेशदृशो° (19) A पूर्वापरौ नैकवर्णौ (20) A adds शब्दस्य (21) All the MSS पाद° (22) A adds : कर्तव्या क्वचित् क्वचित् (23) M reads the fourth foot : सर्वत्र हृद्यमेव तु॥ (24) All the MSS : पाद° (25) M · तनुमध्यान्त्यौ (26) A : यति (27) M : तनुमध्यमा (28) A : अनुरक्ताम् (29) A reads the fourth foot · नो जातु विरक्ताम्।

अपि च। शास्त्रान्तरेष्वन्यान्यपि बहूनि [74] वृत्तान्युक्तानि। तान्यप्रसिद्धत्वात् प्रस्तारादिभिः सिद्धत्वाच्चा[30]चार्येण नोक्तानि।[31] तेषु कानिचिल्लक्षणेनोदाहरणेन च स्थाने स्थाने प्रदर्श्यन्ते। तत्र सौ द्वौ रमणी नाम वृत्तम्—

अनुरागवती रमणीह कृता[32]।
स्मितपूर्ववचो विकृतावयवैः॥

यौ द्वौ विचित्रम्—

विचित्रश्च दृष्ट्या करोतीप्सितं या[33]।
कटाक्षं क्षिपन्ती वधूः सानुरक्ता॥

रमौ मालिनी—

तिष्ठते पत्ये या मालिनी सद्रक्ता।
गायति च्छन्ना वा साऽङ्गनाऽतिस्नेहा[34]॥

अथोष्णिहि—

॥ ६ ॥ कुमारललिता ज्सौ ग् ॥ ३ ॥

जसौ गुरुश्च कुमारललिता। सूत्रमेवोदाहरणम्। केचिद् योः पञ्चसु यतिमाहुः। तद्यथा—

भुजावपि विभूषा[35] कुचावपि च नाभिम्।
पतीं सहजरागा[36] स्त्रियः प्रकटयन्ति॥

अपि च। मसौ गश्च मदलेखा—

भूक्षेपेण ललाटेनोत्कम्पा[37] मदलेखाम्।
या दृष्ट्वा[38] पुरुषं स्मौ धत्ते साप्यनुरक्ता॥[39]

रसौ गश्चोद्धता—

अंशुकं विनमन्ती विक्रियाः सहमेति।
उद्गमापगमादीरुद्धताप्यनुरक्ता॥

रयौ गश्च शान्तिः—

या विमुच्य केशान् स्वान् सन्निधौ निबध्नाति।
याति शान्तिमुन्नीय क्रोधनेऽपि सा स्निग्धा॥

30) M drops च (31) M adds तथा ; S : तेष्वेव (32) A : कथिता (33) A reads the first hemistich : विचित्रश्च दृष्ट्वा भूय करोति क्षितीशम्। M reads दृष्टा करोतीप्सितं (34) A : साऽङ्गना इ स्नेहा ; M : साऽङ्गनापि स्नेहा (35) M : भूजा विभूषा ; S : भुजावपि विभूषा (36) A, M, T & S : सरागा ; M has a lacuna mark after म. A, T & S have none. (37) M : °नोत्कम्पी (38) M : दृष्ट्वा (39) M : पुरुषं स्वीयम्ने मा पुनरक्ता॥

मौ गश्च कमला—

या चरमस्वपना[40] जागरिणी प्रथमम् ।
सा च धत्ते सरसा स्त्री कमलेव दरौ ॥[41]

एव[42] यदि मगणास्त्रयो गुरुश्च पंक्तौ चित्रपदा नाम वृत्तम् ।[43] यदि भाश्चत्वारोऽतिजगत्यामङ्गरुचिर्यदि पञ्चाष्ट्या पद्ममुखी संगताऽवहयो[44] वा यदि षडतिधृत्या कुसुमं यदि सप्ताकृत्या मदिराऽतुला[45] वा । यदष्टौ मा गुरुश्चाभिकृतौ वितानमेव ।

अथानुष्टुभि—

[75] ॥ ६ ॥ माणवकक्रीडितकं[46] भ्तौ ल्गौ ॥ ४ ॥

भतलगा माणवकक्रीडितकं नाम वृत्तम्—

माणवकक्रीडितकं ग्राम्यवचो[47] गर्हितमम् ।[48]
शाठ्यमिति स्त्री कुरुते पुंसि न या रागवती ॥

॥ ६ ॥ चित्रपदा भौ गौ ॥ ५ ॥

भौ द्वौ गौ च चित्रपदा—

एकतमाभ्यनुरक्त[49] व्युज्झति तं सकुलं स्त्री ।
अन्यजने यदि सक्ता चित्रपदा विकृतिर्हि ॥

तथा च यदि षड् भगणा गुरू च द्वौ कृतौ सरोरुहनेत्रा, यदि सप्त विकृतौ मयूरगतिः, यद्यष्टावुत्कृतौ प्रविराजितम् ॥

॥ ६ ॥ विद्युन्माला मौ गौ ॥ ६ ॥

मौ द्वौ गौ च विद्युन्माला—

शय्याद्वेषो गात्रस्फोटो जृम्भा चोच्चैः कोपश्चाग्रे ।
यस्याः सान्तर्निस्नेहा स्त्री दृश्या विद्युन्मालेवादृश्या ॥

रूपचित्रा च । इदमनुष्टुभि सर्वगुरुकम् ।[50] एवं षड् गायत्र्यां तद् सावित्री, यदुष्णिहि तद् गान्धर्वी, यद्बृहत्यां तद्रूपमाला[51] यदतिधृतौ तदैरावती ।[52] आनुष्टुभानां[53] चतुर्षु चतुर्षु[54] यतिः । अपि च—मतौ गौ च द्वौ हंसरुतम्—

स्निग्धा कम्पयति गात्रं दृष्ट्वा[55] वा श्वसिति[56] चाग्रे ।
निस्नेहा वदति रूक्षं प्रोक्ता हंसरुतवाचा ॥

(40) A : च हीन स्वपना (41) M : मता । (42) M omits एवं (43) A & M add स्यात् (44) A : मुरदाथ ; M : सरमावसथ (45) A : अतुलनामा (46) M माणवकाक्रीडितकं (47) A : ग्राम° (48) M : गर्ह्यतमम् (49) M . सत्यपि यत्यनुरक्ते (50) M adds वृत्तम् ; A adds एवं (51) M omits यद् बृहत्यां तद् रूपमाला ; S omits रूप° (52) All the MSS. except T read a word माला here. (53) A adds · उन्मानाद्य (54) A त्रिष ( ) M दृष्ट्वा (56) A : श्वपिति ।

यौ द्वौ लगौ च मनोज्ञम्—

विरक्ताभिमानोद्धता न यान्तं[57] रणद्धि प्रियम् ।
मनोज्ञञ्च[58] धत्ते मुखं मुदा प्रोषिते भर्तरि ॥

नौ द्वौ लौ चालिः—

अपमधु सुमनसमलिरिव पतिरपि ।
विरसयुवतिमसमफलमभिसरति ॥

इदमेव द्विगुणमष्ट्या लघुपदं[59] नाम वृत्तम् । अथ बृहत्यां—

## ॥ ६ ॥ भुजगशिशुसृता नौ म् ॥ ७ ॥

नौ द्वौ मश्च भुजगशिशुसृता[60]—

[76] युवतिरसुहरा[61] स्पर्शे मुखचपलतया[62] क्रूरा ।
कुटिलगतिदुराक्रान्ति[63] भुजगशिशुसृतां द्वेष्टि ॥

## ॥ ६ ॥ हलमुखी नौ स् ॥ ८ ॥

रनसा हलमुखी[64]—

योषितं त्यज[65] हलरसां[66] घर्घरध्वनिमभि[67] नरम् ।[68]
घस्मरामति[69] क्रूराहनु[70] सूकरीमिव हलमुखीम् ॥

त्रिभिः षड्भिश्च यतिः । अपि च । मो मौ च दावहि—

अक्षिविद्धं वाग[71] श्लक्ष्णा सेल[72] स्वाङ्गे स्पर्शो[73] ऽनिष्टः ।[74]
वञ्चितुमेवं न्यस्ता बुद्धिर्मुखसि[75] कस्यां[76] निःस्नेहायाम् ॥

पञ्चसु चतुर्षु च यतिः । उपचित्रा च । सजसा[77] ललितम्—

ललितं वचो वसुधनं कुलमभिजिता च वपुषः ।
सकलं वृथैव विरसा ललनामवाप्य विमुखीम् ॥

मौ द्वौ रश्चोत्सुकम् —

योषिति यत्र[78] नरो नु को न्यस्यति जीवितमप्यसौ ।
उत्सुकमेव विहाय तं याति परं विरसा निजे ॥

अथ पंक्त्याम्—

(57) A : यां तु (58) A drops च (59) A : लपदं (60) M omits this sentence ; S : शिशुभृता (61) A : युवती सुन्दरी (62) A : मुखचलतया (63) A : सुधा कीर्ति (64) M drops the line. (65) M & S : त्यजति (66) M : हरसाद् (67) M drops ध्वनि (68) A : अभिनरान् (69) A : घर्घरध्वनिमती° (70) M : हनुं (71) M : वाम° (72) M : सर्व (73) A : अङ्गस्पर्शो (74) A : अनिष्ट (75) M drops the third foot and मुखसि (76) M : कस्मात् (77) M adds अङ्गिरा ; S adds च (78) S : मत्तु ।

## ॥ ६ ॥ शुद्धविराण् म्सौ ज्गौ ॥ ६ ॥

मसजगाः शुद्धविराट्—

य[79]ज्जेता कुसुमायुधोऽप्ययं कामः शुद्धविराट् कुलान्यपि ।[80]
तत् स्नेहेन[81] दृढां वराङ्गनां तां कृत्वा न विरक्तकास्त्रियम् ॥[82]

अपरान्तिका च ।

## ॥ ६ ॥ रुक्मवती भ्मौ स्गौ भूतेन्द्रियाणि ॥ १० ॥

ममसगा रुक्मवती । पञ्चवर्णान् पठित्वा यतिः स्मृता[83]—

यत् सुभगत्वं गर्वनिरासादन्यगुणोक्त्या[84] वाञ्छति लोकः ।[85]
तस्य विपाको[86] रुक्मवती श्रीः[87] प्रेमवती वा[88] स्त्री न तु रुष्टा ॥

उपचित्रा च । पादान्ते प्राप्ता यतिः । पुनरुपदेशात्तु[89] क्वचित् पादान्तेऽपि न यतिरिति सूचयितुम् तेन यदाद्वर्गायत्र्यस्याधस्तान्न पादान्ते नार्धान्ते यतिरिति, तत् सिद्धम् ॥

## ॥ ६ ॥ पणवो[90]म्नौ य्गौ ॥ ११ ॥

[77] मनयगाः पणवः—

यत्कामो[91] जयपणवध्मानं[92] लोकेषु[93] त्रिषु तनुते तच्च ।
स्त्रीणां भ्रूयुगधनुषो[94] वीर्यं स्निग्धानां किल[95] न विरक्तानाम् ॥

पञ्चसु पञ्चसु यतिः । मात्रासमकश्च ॥

## ॥ ६ ॥ मयूरसारिणी र्जौ र्गौ ॥ १२ ॥

रजरगा मयूरसारिणी—

स्त्रीर्मयूरसारिणीमुखाः[96] यत्र वर्जयन्ति लक्षणैरमन्यैः ।
तच्च ता विरक्तचेतसश्चेन्नानुरक्त[97]चेतसां निषेधः ॥

(79) A ये (80) A · कुनाश्पि (81) A स्नेहो (82) M विरक्तकस्त्रिम् (83) A omits this sentence (84) M · गुणोक्त (85) M · लोक ; S श्लोक (86) M · विपाके (87) M · स्त्री (88) A चा (89) M °रुपदिष्टत्वात् (90) M · पटवा (91) A · °कामा (92) A · ध्माश्मो ; M धन्य ; S ध्वनि (93) A लोके्ष्वस्मिन्; M · केषु (94) M : °धनुषे (95) A नूनं च in place of किल (96) M reads · स्त्रीं मयूरसारिणीं यत् (97) A °चानुरक्त°

॥ ६ ॥ मत्ता म्भौ सगौ समुद्ररसाः ॥ १३ ॥

ममसगा मत्ता। चत्वारः षट् च यतिस्थानम्[98]—

यद्वामत्वं[99] युवतिषु मत्ता वृत्त[100] वित्तं जहति तनुश्च।[101]

तत्तत्[102] प्रेम प्रियमधुपाना[103]न्निःस्नेहाभि[104]र्जयति न[105] सङ्गम्॥

वानवासिका[106] च।

॥ ६ ॥ उपस्थिता तजौ जगौ ॥ १४ ॥

तो जौ द्वौ गुरुश्चोपस्थिता—

यद्वा दुरवापतपश्चयं हित्वा मुनयोऽप्यमवंश्चला।[107]

स्निग्धां प्रसभमुपस्थितां[108] दृष्ट्वा तपसोऽपि[109] विरागिणः॥[110]

अपि च। सास्त्रयो गुरुश्च[111] मेघवितानम्[112]—

यदमी अपि[113] मेघवितानं[114] सरसाः समवेक्ष्य रमन्ते।

तदपि प्रियया रसवत्या विरसा गृहसंघटनायै॥[115]

आपातलिका च। रः सौ गश्च मणिरागः[116]—

यज्जनः कुरुते मणिरागैरंशुकैश्च परिष्कृतिमङ्गे।

तद्धि वीक्ष्य वधूमनुरक्तां देहदोष[117]दृशैव विरक्ताम्॥

मतयगाश्चम्पकमाला—

यत्त्यजति स्वं विरहग्लानं[118] चम्पकमालामृदुलं देहम्।[119]

तच्च सरागममदाहेतोस्तद्धि[120] विरक्ता वनिताऽस्त्याज्याः॥

पञ्चभिः पञ्चभिश्च यतिर्मात्रासमकश्च। मरयगास्तडिन्माला [78]—

यद्दान्तं[121] विदुर्द्व[122] प्रोत्पामे[123]वं धन्या न मोक्षशास्त्रेषु।

सोऽपि स्नेहे सरागरामाणां[124] मानोऽभाणां पुनस्तडिन्माला॥

अथ त्रिष्टुभि—

(98) M चतुर षट् यतिरवा यतिस्थाने ; S चतुर षट् च यतिरवा यतिस्थान (99) A मत्ता ; M यद्वामत्वं (100) A वृत्तविषु मत्तावृत्तम् (101) A तनुं तत्त्व (102) A lacuna ; S : तदन् (103) A & M प्रियमधुपानां (104) M निःस्नेहाभि (105) A तु (106) M वानवासिकं (107) M चला (108) A प्रियजानुपस्थिता ; M तरजानुपस्थितां (109) A तपसे ; M तमसो (110) A स्वरमाल ; M विरागिणो (111) A adds आदि ; M & S गुरुश्चादि (112) A मेघुवितायमि ; M मेघुन्नितानम् ; S मेघवितानम् (113) A आदिमेषु ; M अपि (114) A °वितानम् ; M मेघुवितानम् (115) A विरसा गृहसंघटनायै M विरसा गृहसंघटनायै (116) M adds : र सौ द्वौ गुरुश्च मणिराग (117) M: साभिनाय° (118) A विरहग्लानि ; M विरहग्लानं (119) M : चम्पकमालां मृदुमत्तं भम् (120) A : °रचास्तु ; M : रचामि° (121) A : य इन्दान्त ; M : यद्दान्तं (122) A विदुर्द्वा ; M : विजय (123) A पाप्मान् , M : पाप्मान ; S पाप्मान् (124) M : नापि स्नेहे विरागिरामाणां

|| ६ || एकरूपं म्सौ जगौ ग् || १५ ||

मसजा गौ च द्वाविंकरूपम्—

भ्रूवाणा[125]द् घन[126]पद्मराजिसज्याद्[127] यस्त्र[128]स्यन्यबलाकटाक्षकाण्डात्।[129]

नासौ श्रुत्यति[130] नैकरूपमास्ते चित्रं हेलनया[131]ऽस्यमेति भावम्॥[132]

इत्तिशान्तिका च॥

|| ६ || इन्द्रवज्रा तौ जगौ ग् || १६ ||

तौ द्वौ जो गौ च द्वाविन्द्रवज्रा[133]—

यस्येन्द्रवज्राधिक[134]गोत्र[135]गर्वो विद्यार्थवंशैर्यदि चास्य[136]धाष्टर्यम्।[137]

नयत्यदो[138] मन्मथमन्थराणां[139] स्त्रीणां कटाक्षैर्गमितस्य[140] दास्यम्॥

|| ६ || उपेन्द्रवज्रा जतौ जगौ ग् || १७ ||

जतजा गौ चो[141]पेन्द्रवज्रा—

तदैव[142] सिद्धो[143] विजयो बभूव धवेभ्वनद्धास्त्रखजूरिकाणाम्।[144]

यदा[145] विलासंगमिताङ्गनानामु[146]पेन्द्रवज्राबुभयोरपि श्रीः॥

|| ६ || आद्यन्तावुपजातयः || १८ ||

इह प्रमङ्गादिप्रवृत्तनीन्द्रवज्रोपेन्द्रवज्रयोः पादसङ्करेणोच्यन्ते। एतयो.[147] पादावर्धस्यादिरन्तो[148] यदि स्यातामेकस्मिन्नेव[149] श्लोके तदुपजातयो[150] नाम वृत्तानि।

आम्यानुपजातय इति वक्तव्ये आद्यन्तावुपजातय[151] इति सुवन्नाचार्य[152] इमा विपरीताख्यान-वनाख्यानकया व्यावर्तयति।[153] यदि हीन्द्रवज्रापाद उभयोरर्धयोरादिरेव स्यादुपेन्द्रवज्रापादोऽन्त्य आख्यानकी।[154] अथोपेन्द्रवज्रापाद आदिरितरोऽन्त्यो विपरीताख्यानकी। तस्मादिन्द्रवज्रापाद एव

(125) M भ्रूज्याराना (126) A : °न्धुन ; M घृन° (127) A पद्मराजिसज्या ; M : पक्षराजि सज्जा (128) A : यस्या ; M : र्या ; S : धात्र (129) M . बना कटाक्षकाण्डम् (130) A श्रोत्यति ; M : कुश्यति (131) A : मित्तमिया ; M : हेलकया (132) A : द्वयत्वमेति (133) A इन्द्रवज्रौ (134) A : अग्नि° ; S अजित° (135) M गात्र (136) A विन्यर्थवशश्च यदस्य (137) M धार्ष्यम् (138) A : शान्यलयो ; M नयदत्यदो ; S : नयत्यथो (139) M मन्मथमन्थराणां (140) A नमितुस्य ; S : कमितस्य (141) A adds द्वौ (142) A तदैव (143) M सिद्धं (144) A . खना-रिकाणाम् ; M : खन्······ ; S : खजुरिणाम् (145) A यथा (146) A विलासाङ्गमिहाङ्गनानां ; M विलासङ्गम हाङ्गनानां (147) A adds वृत्तयो , M reads यदा पूर्वोक्तयोस्तयो (148) A आदि-रथान्तश्च (149) M : स्यातामेक···कस्मिन्ने (150) A : तदेवोपजातयो ; M तदोपजातयो (151) A drops उपजातय (152) M drops आचार्य (153) M इमे विपरीताख्यान नयया ख्यानक्या वृत्तय इति ; A : वावर्तयति ; S : वरोवर्ति (154) M : पादयान्ते आख्यानकी स्यात्

पूर्वार्धस्य परस्य वाऽ[155]ऽदिरन्तश्च स्यात्। पूर्वस्यादिः परस्यान्त इति वा परस्यादिः पूर्वस्यान्त इति वा पूर्वादिः परादिरितिवा पूर्वान्तः परान्त इति वा।[156] [79] तयोपेन्द्रवज्रापादोऽपि—

यद्वाऽपराधोऽत्र न कामिनीनां तारचापि पुंसां[157] नयनैः स्खलन्ति।
स्त्रियः पुमांसश्च तथैव सृष्टा[158] यथा मिथो यान्तुऽपजात[159]योऽपि॥
लज्जा गता क्वापि[160] च लज्जितेव[161] श्रुतं क्वचिच्छ्रोत्रपुटे निलीनम्।
कुलाभिमानो[162] मुनिनैव[163] मुक्तो मुक्ते वधूभिर्नयनाशुपाशे॥[164]
तिष्ठन्तु कामाकुल[165]दृष्टिपाता भावाश्च[166] तेषामुपजातिभेदाः।
एकाऽपि वाणी स्मितमञ्जुरासा[167] करोति पुंसामपरामवस्थाम्॥[168]

द्वादशोपजातयः। अयञ्च न्यायोऽन्यत्रापि[169]स्यात्। तेन[170] त्रैष्टुभानामन्येषां वा वृत्तानां पादाः समासंख्या द्वौ द्वावेकभूय भूत्वा द्वादश,[171] त्रयस्त्रय एकभूयं भूत्वाऽष्टादश,[172] चत्वारश्चत्वार एकभूयं भूत्वा चतुर्विंशतिरिति विषमवृत्तानि।[173] एषा विषमाक्षराणां राश्यूनमिति[174] (V 5) संख्योक्ता। यत् पुन क्वचित्—

एह्येहि फुल्लाम्बुजपद्मनेत्र नमोऽस्तु ते देव पराप्रमेय।
प्रसद्य मां पालय लोकनाथ रक्षेह मां[175] भूतशरण्यसङ्ग॥[176]

इत्यादिषु प्रथमस्य तृतीयस्य च पादस्य लघ्वन्तत्वं दृश्यते, तदन्येष्वेव[177] विषमेषु लघ्वन्तं गुर्वन्तं वा पाद[178] द्रष्टव्यम्। नेन्द्रवज्रोपेन्द्रवज्रापादसंकरजम्। तयोर्गुर्वन्तत्वात्।[179] ततश्च यदेके[180] वर्णयन्ति—गन्त इत्यत्र पादान्तेऽपि लघो[181]र्गुरुसंज्ञा विधीयत इति, तदपि[182] प्रत्युक्तम्। विषमेष्वेव तदुपपत्तेः।[183]

एवं तदर्धान्तेऽपि[184] तथैवास्तु।[185] नैतत्। आर्यादीनामर्धस्य लघ्वन्तत्वासम्भवात्। दृश्यते च[186] गच्छति पुरः शरीरं धावति पश्चादसंस्थितं चेतः। चीनांशुकमिव केतोः प्रतिवातं नीयमानस्येत्यादिषु। तदर्धान्तेवावश्यं[187] गुरुसंज्ञा विधेया। अन्यथा मात्रासंख्या[188]पकर्षात्तदेव[189] प्रयोगदोषमन्वाद[190]न्येषामपि गृह्यते॥[191]

(155) M : पारस्य in place of परस्य वा (156) M reads the sentence पूर्वादि परस्यादिरिति परादि पूर्वान्त इति वा। (157) A : पुमो (158) A : दृष्टा, S सृष्टो (159) M : या उपजात॰ (160) A : वापि (161) A : चलन्ति ते वा (162) S कुलाभिमानो (163) M : मुनिनैव (164) A ॰पानो S : ॰पाश (165) A : तामाकुल॰ (166) M : भावश्च (167) M : स्मि मञ्जुरासा, S स्मितमञ्जुरासा (168) M पुंसामिव रामवस्थाम् (169) M drops अपि (170) A adds अन्येष्वपि (171) M adds द्वादश विषमवृत्तानि भवन्ति (172) All the MSS. read षट्त्रिंशत् (173) A adds भवन्ति; M drops एकभूयं भूत्वा (174) A : विषमाक्षराणि श्रूनमिति; M विषमं च राश्यूनमिति (175) M : रक्षो॰॰ मा (176) A. cites here *Kumāra* I 3ab. (177) M : तदन्येष्वेव च (178) A ॰माद्गुरुत्वं M : मध्यान्तगुर्वन्तपादसंकरजा (179) M : इन्द्रवज्रोपेन्द्रवज्रापादसंकरजं तयो गुर्वन्तत्वात् (180) M drops यद् (181) A & M हृस्वस्य (182) A drops तदपि (183) M : विषमेष्वेवानु-पपत्तेः (184) M & S drop अपि (185) A : तथैव मास्तु (186) M : लघ्वन्तत्वसम्भवाद् दृश्यते च। (187) M : तदर्धमेवावश्यं, A : तदर्धे एवावश्यं S : तदर्धस्यैवावश्य (188) A drops संख्या (189) M : तत्सर्व॰ (190) A : योगदोषमन्वाद्; S : प्रयोगदोषमन्वाद् (191) M & S : वदन्ते।

॥ ६ ॥ दोधकं[192] भौ भगौ ग् ॥ १९ ॥

भास्त्रयो गौ च द्वौ दोधकम्—

द्यूतवधादिभिरर्थसमीहा[193] देहविपन्नफलसाहस-[80]-कर्म ।[194]
दोधकवृत्तमितीह भजन्ते धृष्टविदग्धवधूजनवश्या ॥[195]

॥ ६ ॥ शालिनी म्तौ तगौ ग् समुद्रर्षिभिः[196] ॥ २० ॥

मः तौ[197] गौ च शालिनी। चत्वारः सप्त च यतिस्थानम्—

नीवीमग्रे[198] स्रंसयित्वा[199] वसानाः केशानग्रे संकिरन्तीर्विकीर्य ।
लीलां लीला[200]शालिनीर्दर्शयन्तीर्न प्रेक्षन्ते[201] पण्डिता जेतुकामाः ॥

॥ ६ ॥ वातोर्मी मभौ तगौ गश्च ॥ २१ ॥

ममता गौ च द्वौ वातोर्मी। चकारात् पूर्वयतिरनुकृष्यते[202]—

अन्ये तामिर्विजिता[203] वाणिनीभिर्भूयो भूयो हृदि चिन्ताविलासैः ।[204]
त्यक्त्वा लज्जां कुलधर्मांश्च नीत्या[205] संसेवन्ते धूतवा[206]तोर्मिधर्मम् ॥[207]

॥ ६ ॥ भ्रमरविलसितं मभौ न्लौ गश्च ॥ २२ ॥

मभनलगा भ्रमरविलसितम्। चकाराद्यत्याकर्षः[208]—

दृष्ट्वा क्वापि[209] भ्रमरविलसितान्[210] देशांश्चान्या[211] वनगिरिसरितः ।[212]
कान्तां कामी[213] हृदि ननु[214] कुरुते धन्यम्मन्य[215] शुभमृषिचरितम् ॥[216]

वानवासिका च ॥

॥ ६ ॥ रथोद्धता नौ लौ ग् ॥ २३ ॥[217]

रनरा लगौ च रथोद्धता—

यत्र केवलमनोरथोद्धता नाश्रिताऽपि[218] विकरोति मानसम् ।
तत्र सन्निहितवाणिनीजने[219] श्रद्धीत विजयाय कः पुमान् ॥

अपरान्तिका च ॥

(192) M : तोधकं (193) M : द्यूतवदादिभिरर्थसमीहा (194) M देहविकनीफलसाहसकान्तम् (195) M : शालिन्युक्ता दमौ दगौ ग् । समुद्रर्षय: (196) S : वेश्याः (197) A adds द्वौ (198) M अग्रे (199) M : संमयित्वा (200) A : लीला (201) M : प्रदृश्यन्ते (202) आकृष्यते (203) M : निर्जिता (204) M : हृदि चित्ता ; A : हृतचित्ता (205) A : नित्यं ; S : रीत्या (206) A धृत°, M भूत° (207) A : °धर्मः (208) A : यतिराकृष्यते (209) A दृष्टा क्वाऽपि ; M दृष्ट्वापि (210) A & M भ्रमरविनमिता (211) A : देशाश्चान्या ; M : देशांश्चान्यान् (212) A गिरिवनसलिलाम् ; S : गिरिवनसरितां (213) A : कामी कान्तां (214) A : न तु ; M : वर्तु ; S : बत (215) A : धन्यः अन्य (216) A : शुभ ऋषिचरितम् ; M : अन्यशुभमृषिचरितम् (217) M omits the *vṛtti* and illustration on this *sūtra* and runs on to the next *sūtra*. (218) S : नार्पिताऽपि (219) S °भामिनीजने

॥ ६ ॥ स्वागता नौ भ्गौ ग् ॥ २४ ॥

रनभा गौ च द्वौ स्वागता—

पूर्वमेव महिलामधुमत्तः[220] तामिरेव हृदयं हृतशेषम् ।[221]

अद्य[222] क्लिश्यति[223] वपुर्विरहेण[224] स्वागतानि कुशलानि खलन्द ॥

आपातलिका[225] च ॥

॥ ६ ॥ वृत्ता नौ स्गौ ग् ॥ २५ ॥

नौ द्वौ सो गौ च[226] वृत्ता ।[227] वृन्तेति पाठान्तरम्—

दमयति[228] मनसिशये[229] स्वाङ्ग[230] रमयति युवतिजने वित्तम् ।[231]

निपतति विपरिणतो[232] वृत्तात्[233] फलमिव विपरिणतं वृन्तात् ॥[234]

[81] ॥ ६ ॥ श्येनी जौ लौ ग् ॥ २६ ॥

रज्रा लगौ श्येनी—

श्येन्यमूषु कामिनीषु यत्[235]स्मिते दन्तपंक्तिरायता विलान्तरा ।[236]

श्येन्यसौ[237] स्वयं नरस्य रागिण[238] चित्तमीनहारिणी[239] किमु स्त्रिय ॥

॥ ६ ॥ प्रत्यवबोधो भ्तौ न्गौ ग् ॥ २७ ॥[240]

भतना गौ च प्रत्यवबोध —

यद्वसदिग्धान्[241] युवतिकलापादीक्षणबाणान्[242] रतिपतिरस्यन् ।

प्रत्यवबोधं हरति नराणां तेन स भान्ते श्वरकुलेऽपि ॥[243]

कुड्मलदन्ती शीर्षा ।[244] पञ्चसु षट्सु च यतिः ।[245] वानवासिका च । अत्र[246] नवभ्यो यदि खलु सगणस्तान्तु जगत्यां[247] विदधति[248] ललनाम् । वानवासिका च ।[249]

नयमा गौ[250] चेदनवसिता[251]—

यदपि वधूनां[252] नेत्रकलापादनवसितेभ्यो[253]विभ्रमबाणान् ।

हृदयमभिन्दा मुञ्चति चित्ते वसति[254] ततोऽयं[255] धन्विषु[256] कामः ॥

220) M · महिमामधुहृद (221) A : हृतशेष (222) A · अस्य (223) A : कृश्यति (224) M : विरहेण ; S : विरहे च (225) M · उत्पातलिका (226) M adds द्वौ (227) M & S add नाम (228) A · कम्पयति (229) A : मनसि मो (230) A : स्वाराय ; S : स्वान्तं (231) M & S · वित्तम् (232) M विपरिणतं (233) M : वृन्तात् (234) M : तावत् ; S : वृत्तात् (235) A · मा (236) A · आयतघनान्तरा (237) A : श्येन्यसौ ; S : श्येन्यसौ (238) A drops रागिणः (239) A : कामिनी रिजि ; M · चित्तमीन हरिणी (240) A does not recognise this as a separate *sūtra.* (241) M द्रुमरसयान् (242) A · ईक्षणबाणा (243) A · कुलेषु : S · कुलानि (244) A drops शी ; M · कुड्मलनादि धी (245) A · सत्सु मति (246) A : यत्र (247) M : जगत्यः पत्ता (248) M drops विदधति (249) A adds वा after लनां ; M drops वानवासिका च ; : ललनां वानवासिकां वा (250) A drops (251) M · चेद्वानवासिका ; S : च नवासिता (252) A : धानां (253) M : अनवसितेषु (254) A : भवसति (255) A : तत्रो वि (256) A धनीषु ; S : धन्विषु ।

षट्सु पञ्चसु[257] यतिरुपचित्रा च ॥

अथ जगत्याम्—

॥ ६ ॥ जगती ॥ २८ ॥

अधिकारोऽयमाऽध्यायपरिसमाप्ते । ननु[258] किमर्थोऽयम् ? अक्षरसंख्ययैव[259] गायत्र्यादिवज्जगतीति गम्यते ।

उच्यते—तोटकं स इत्यादिष्वनुक्तसंख्येषु द्वादशानामेवाक्षराणां ग्रहणं स्यादिति । तथापि[260] वृथैव[261] पुटद्रुत[262]विलम्बितादीनां द्वादशाक्षराणां मध्ये पाठादेव तत्सिद्धेः ।[263]

एवं तर्हि, पूर्वापरपदार्थवशात् संख्याऽस्मिन् तन्त्रे[264] नाश्रीयत इति सूचयितुम् । तथा चोक्तादीनां पूर्वस्मात् संख्यानियमो[265] नाश्रितः ।[266] समानीप्रमाणीवितानानां पादस्यानुष्टुब्वक्त्रमि (5/9)त्यस्मात् परस्मादष्टाक्षरत्वं नाश्रीयते[267] । स्वरूपेणोपात्ता[268] संख्याऽऽश्रीयत[269] एव[270] यजुषां षट् साम्नां द्विरित्यादिषु । अत एवात्र[271] संख्या[272] क्वचित् स्वरूपेणोपनीयते[273] क्वचिद्रस्वादिभिरेतैः ॥

[82] ॥ ६ ॥ वंशस्थं जतौ ज्रौ ॥ २९ ॥

जतजरा वंशस्थम्—

रमैः सृजन्तीं मदरागविभ्रम[274]
निषेव्य हालामिव वारवारुणीम् ।[275]
पतन्त्य[276]मीका वरवारवाणिनो[277]—
मपि स्ववंशस्थजनोचितक्रियाः ॥[278]

॥ ६ ॥ इन्द्रवंशा तौ ज्रौ ॥ ३० ॥

तौ ज्रौ जरौ चेन्द्रवंशा—

अर्थेनमन्तोषु[279] न हार्दसंस्तवे[280]—
र्यो[281] वारमुख्यासु रतोऽतुलास्वपि ।[282]
तस्मिन्न[283] जातु च्युतकीर्तितेजसि[284]
श्रीरिन्द्रवंशाभिजनेऽपि तिष्ठति ॥

(257) M : पञ्चसु षट्सु (258) A adds च (259) A : सख्यायैव (260) M : अथापि , S तत्रापि (261) A व्यर्थमेव (262) A : °धृत° (263) M : पाठादेतत्प्रसिद्धे (264) A : तत्र (265) A drops संख्यानियमो (266) M : नाश्रीयते श्रित (267) A drops पर... श्रीयते ; M : adds उक्तादीनान्तु न पूर्वस्मात् संख्यानियमो (268) A रूपेण रूपात्तत् (269) M सख्यापूर्वं समाश्रीयते (270) A ends the sentence here. (271) M adds च (272) A संख्यया (273) A : स्वरूपे नोपनीयते (274) M : मदिरा गतिभ्रमा (275) A : वारवाणीम् (276) A : पतत्य° (277) M : वरवाणि (278) M क्रियाम् (279) A अथोन्नमन्तीषु (280) A : सहार्दवास्तवे ; S : महार्घसंस्तरे (281) M : या ; S ये (282) A °हित्र · M · [illegible]

॥ ६ ॥ द्रुतविलम्बितं न्भौ भ्रौ ॥ ३१ ॥

नो भौ द्वौ रश्च द्रुतविलम्बितम्—

नवरसस्य परस्य विकारिका
स्वपरसास्वतिरपगुणासु च ।
रुचिफलं गणिकासु सुधा[285]न्नृणां
द्रुतविलम्बितमग्निशिखास्विव ।[286]

॥ ६ ॥ तोटकं सः ॥ ३२ ॥

सगणाश्चत्वारश्चेत्तोटकम्—

विटवीरजनस्य गृहाः कुलटा—
स्वजना अपराद्धशराः[287] पुरुषाः ।[288]
श्रुतमस्य महा[289]समरस्य कथा
अपि तोटकगन्धक[290]नाटकवान् ॥

[291]तोटकमेव सगणाः[292] षट् चेद्धृतौ[293] ललितं नाम वृत्तम् ॥[294]

॥ ६ ॥ पुटो नौ म्यौ वसुसमुद्राः ॥ ३३ ॥

नौ द्वौ मयौ च पुटः । अष्टौ चत्वारश्च यतिस्थानम्——

विटजन[295]सहवासा दुष्टयनारी[296]
रुचिरसजवाचा[297] सद्भिरार्यैः ।
अशुकमपि[298] भजन्ते[299] सुस्वभावाः
पुटमिव[300] कुसुमानां पुण्यगन्धाः ॥[301]

(285) A · फलं (286) M : °शिखामिव (287) M : स्वजनानपराद्धशरा (288) M · प्ररथा ; S · परुषा (289) A : महत्° (290) A · तोटकं गर्भ° (291) A adds before this : नाद्ये संरम्भवाया बाट् (292) M drops सगणा (293) A · अतिधृतौ (294) M adds स्यात् (295) A विटजन° (296) A · सण नारी ; S · सुन्दनार्य (297) A · धनमहवासा ; M drops रुचिर° ; (298) M · अनकमपि ; S : अगुरुमपि (299) A · भजन्ति (300) M : पुनमिव (301) M commits Haplology here and drops the following lines including the next *sūtra* and its illustration (first half) ; A · ...र्णं ।

॥ ६ ॥ प्रमुदितवदना नौ रौ ॥ ३४ ॥

नौ द्वौ रौ च द्वौ प्रमुदितवदना। चञ्चलाक्षी नौ राविति केचित् पठन्ति——

न मदनमृगचञ्चलाक्षीं व्रजेत्[302]
प्रमुदितवदनाञ्च वेश्याङ्गनाम्।
त्यजति हि[303] धनलोलुपां तां[304] स्मरो
न सुरमिरिति[305] शालमञ्जीमिव ॥[306]

॥ ६ ॥ जलोद्धतगतिः जसौ जसौ रसर्तवः ॥ ३५ ॥

जसौ द्विकौ जलोद्धतगतिः। षड्साः षड्तवो[307] यतिस्थानम्—

गुणोद्धतगतिः कुलोत्तरवधूः[308]
घनोद्धतगतिः सुमाननवधूः।[309]
तनूद्धतगतिः पणोचितवधूः[310]
यथा तनुनदी[311] जलोद्धतगतिः ॥

[83] ॥ ६ ॥ भुजङ्गप्रयातं यः ॥ ३६ ॥

यश्चत्वारो भुजङ्गप्रयातम्[312]—

गलत्कञ्चुकान्तैर्बहिः स्नेहकान्ता[314]
परेभ्यासजन्ती[315] रसं प्राणमूल्यम्।[316]
भुजङ्गप्रयातं पदं घृष्यमाना[317]
भुजङ्गीव वक्रा[318] न वेश्या[319] निषेव्या ॥[320]

षड्भिर्यतिरिति केचित्। एवं याः षट्चेद् तावाप्यायनो[321] नाम वृत्तम्॥

(302) A : व्रजतु मदनमृगचञ्चलाक्षीं ; M: न तु वनमृगचञ्चलाक्षीं , S : व्रजतु (303) A drops हि (304) A : मदलोलकान्तां, S: वद लोलुपान्तां (305)A M&S: सुरतिरिति (306) A. सानभञ्जीमिव , M. सानभञ्जमिव (307) A: षट् षट् (308) M : कुलोत्तरवधू , S. कुलो नरवधू (309) A : सुमध्यमवधू (310) M : पणोचित-वर (311) M : यथैव ललना ; S. यथ्यातुलना (312) M omits the name. (313) M : कञ्चुकाग्रैः (314) M & S: स्नेहकारैः (315) A : परेभ्यानयन्ती (316) A रस प्राणपूज्याम् , M : रसप्राणपूज्यम् (317) M : पदङ्घ्रि समाना ; S : वदन्तीष्यमाना (318) A : वक्त्र (319) M : विवेश्या (320) A & M : निवेश्या (321) A : षट् चेद् ऋताप्यायनो ; M : षट् चोदनौ उत्साप्यायनी

## ॥ ६ ॥ स्रग्विणी रः ॥ ३७ ॥

राश्चत्वारः स्रग्विणी—

चन्द्रकान्तप्रभा[322] चन्द्रशाला शुभा
मत्त[323]वेश्याङ्गना मण्डिता[324] स्रग्विणी ।
यत्र तत्र स्मरोऽ[325]नङ्ग एवाङ्गवान्[326]
स्यादिति[327] प्रायशः पिङ्गसंसत्कथा ॥[328]

अत्राप्यर्धे यतिरिति केचित् ॥

## ॥ ६ ॥ हिमविकरा न्यौ न्यौ ॥ ३८ ॥

नयौ द्विकौ हिमविकरा—

नयगुणयुग्मं रसयुगयन्त्या[329]
हिमविकरा[330]स्याद्गजललितं वा ।[331]
कुसुम[332]विचित्रे त्यपरमतेऽसौ
मदनविकारेत्यपरमतेऽपि ॥[333]

वानवासिका च ॥

## ॥ ६ ॥ शशप्लुता[334]त्यौ त्यौ ॥ ३९ ॥

तयौ द्विकौ शशप्लुता—

स्मृत्वाऽप्यधि[335]पादं मञ्जीरकशिञ्जां[336]
कर्णे[337] गुञ्जाशी[338] हस्ते वलयानि ।
कण्ठे मणिमालां वेशेषु[339] वपुना
कामग्रहपीडां[340] को नाम सहेत[341] ॥

अर्धे यतिः । मणिमालेत्यन्ये[342] ॥

(322) A °निशा ; S · °निभा (323) M. मत्र° (324) M मण्डित° (325) A स्वरो (326) A · मद्ग एवाङ्गवां : M · °नङ्गयाङ्गवान्, S . मद्ग एवाङ्गवान् (327) M : स्यति (328) M · °प्यङ्गसंसत्कथा (329) A : हिमरसवन्या (330) M हिमकविकरा (331) गजललितं (332) A · किमिति : S विसम° (333) A . मदनविकारेत्यपरमते च ; M : मदनविकारेत्यपरमतेऽपि (334) M शशप्लुतौ (335) A omits the first four letters (336) M : मञ्जीरकमिञ्जां (337) M & S कण्ठे (338) M गुञ्जासो (339) M · वरेषु (340) M · कामगृहपीडां (341) M हस्ते , S · सहते (342) A adds पठ्यतोऽपि दैव । तां शशप्लुतां मणिमालेति केचित् पठन्ति ।

॥ ६ ॥ प्रमिताक्षरा स्जौ सौ ॥ ४० ॥

सजौ सौ च द्वौ प्रमिताक्षरा—

प्रमिताक्षरेण वचनेन हित[343]
कथयामि ते[344] शृणु च तद् कुरु च ।
गणिकाश्रितामपि पुरीं सततं
भुजगाश्रितामिव[345] तरीं[346] जहिहि ॥

॥ ६ ॥ वैश्वदेवी मौ याविन्द्रियर्षयः ॥ ४१ ॥

मौ द्वौ यौ च द्वौ वैश्वदेवी । पञ्च सप्त च यति[347]—

पूर्वाषाढाणाश्चाप्यभावे[348] सहाया[349]
नित्यभ्रष्टानां[350] मूलसंस्थानवृत्तेः ।
अग्रे कुम्भस्य स्थायुका चन्द्रकान्ता[351]
रूपाजीवा स्याद्वैश्वदेवीव[352] तारा ॥

चन्द्रकान्तेत्यन्ये[353] ॥

[84] ॥ ६ ॥ कान्तोत्पीडाम्भौ स्मौ समुद्रवसवः ॥ ४२ ॥

भमसमा. कान्तोत्पीडा । चत्वारोऽष्टौ च यतिस्थानम्[354]—

कुर्वन्त्येषा कुलमवकान्तोत्पीडा[355]
विभ्रेषश्च[356] स्थिरकुलमर्यादानाम् ।
भ्रश्यत्स्नेहा[357] जगमिव नीलीरागा
दौर्वैश्या जलधरमालातुल्या ॥

जलधरमालेत्यन्ये ॥[358]

॥ ६ ॥ नवमालिनी न्जौ भ्याविति[359] ॥ ४३ ॥

नजभया नवमालिनी—

परजनदूषणासु सहवासान्[360]
परपरिधान झुम्नवसनासु ।

(343) A : चैत (344) A adds तु (345) M . भुजगान्विताभिव (346) A drops the word , S पुरीं (347) M reads चन्द्रकान्तेत्यन्ये here in a similar manner as in the *vrtti* on VI. 40 (348) A चा प्रभावे (349) M : सभार्या (350) M तिर्यक दृष्ट्वा ना , S तिर्यभृष्टानां (351) M : चम्पकान्ता (352) A : वैश्वदेवी च (353) A adds . पठन्तीति शेष । वैश्वदेवीं चन्द्रकान्तेति केचिद् पठन्ति ॥ (354) M mentions the alternative name here. (355) M कुलभवकान्ता पीडा (356) A · विभेदश्च (357) A · तस्मात् स्नेहात् ; S तस्य स्नेहात् (358) A adds कान्तोत्पीडां जलधरमालेति केचित् पठन्ति ॥ (359) M omits इति (360) A · परजनदूषिता सुमहवासात् ; M : परजन दूषणीषु सहवासा ॥

अभिनवमालिनीषु परमात्म्यैः[361]
पततु[362]मनो न वारवनितासु ॥

अपि च—नो जौ यश्च तामरसं ललितपदं वा-
भ्रुकुटिकटाक्षविलास[363]विकारैः
कृतविकृतैर्गणिकावदनस्य ।
कथमिव तामरसं तुलना भ्रू-
ल्ललितपदं यदवाप्य [364] न लीनम्[365] ॥

नभजया द्रुतपदं[366]मुखरं वा कलहंसा वा—
द्रुतपदं[367] मुखरनूपुरमेषा[368]
व्रजति मत्तकलहंसरुतश्रीः ।
इति गृणाति गणिका परधर्मे-
र्न परिपश्यति[369] गुणान् यदि[370] तस्याः ॥

नभजरा मत्तकोकिलं प्रियंवदा च—
सकलचित्तमति[371]मत्तकोकिल-
ध्वनिरियं सुखयति प्रियंवदा ।
इति च[372] शंसति खलो मनाक्[373] क्वचित्
कलरवैरपनतां[374] पयस्विनम्[375] ॥

द्वे इमे[376] अपरान्तिके च । तभजरा ललिता —
अङ्गानि सङ्गललितानि[377]विभ्रमा
चित्रा[378] विचित्ररचना[379] च वाणिति ।
एतानि वेत्ति गणिकासु कामुको
जानाति[380] साऽपि मदने न[381] साधुताम्[382] ॥

इति भगवतो यादवप्रकाशस्य कृतौ पिङ्गलनागच्छन्दोविचितिभाष्ये षष्ठोऽध्यायः ॥

(361) M · परमात्ये (362) M & S : पतति (363) M · °विकास° (364) M : मदवाप (365) M · नलिनम् ; S · न लीनम् (366) A & S · द्रुतपदा (367) A द्रुतपदा (368) A °नूपुरमेषा (369) M · चर पश्यति , S : च न पश्यति (370) A गुणन्यदि ; M गुणिन्यदि (371) A · °चित्तमधि ; M सकलचित्त मति (372) M drops च (373) A · धनामनाक् ; M मनोऽदन (374) A क...मपनता (375) A & S · पयस्विनम् (376) A drops इमे (377) M · सङ्गि ललितानि (378) A · विभ्रमा चित्रा ; M · विभ्रमाचित्रा (379) A · चित्रविचित्ररचना (380) M · जानन्ति (381) M · मदनस्य ; S मदनेन (382) A : साधुता ; M समता

# अथ सप्तमोऽध्यायः

[ 85 ] इदानीमतिजगत्यादयश्छन्दसः क्रियन्ते ॥ तत्रातिजगत्याम्[1]—

॥ ७ ॥ [2]प्रहर्षिणी म्नौ ज्रौ ग् त्रिकदशकौ ॥ १ ॥

मनजरा गुरुश्च प्रहर्षिणी । त्रिकं दशकश्च[3] यतिस्थानम्—

छित्वाऽर्थे[4] युवतिजने च सङ्गपाशा-
नाध्याय[5] त्रिभुवननाथनाथमीशम् ।
कुर्याद्यो[6]यमनियमादिकाङ्गयोगान्[7]
मोक्षाख्यां व्रजति दशां प्रहर्षिणीं ताम्[8] ॥

॥ ७ ॥ रुचिरा जभौ स्जौ ग् समुद्रनवकौ ॥ २ ॥

जभसजगाः रुचिरा ।[9] चत्वारो नवकश्च[10] यतिस्थानम्—

विभावरीमिह[11] रुचिराममीप्सतोः[12]
परस्परं शशितमसोर्जिगीषतोः ।
पुनः पुनः क्षयमुदयञ्च पश्यतां
नृणां श्रिये[13] कलहकथा कथं भवेत् ॥

॥ ७ ॥ मत्तमयूरं म्तौ य्सौ ग् च ॥ ३ ॥

मतयसगा मत्तमयूरम् । चकारात् पूर्वयत्यनुकर्षः—

धान्यै[14]र्वन्यैर्वर्तितुकाम.[15] फलमूलैः
ग्लानिं स्नाना[16] न स्मरतीत्यत्र न चित्रम्[17] ।
काष्ठाश्लेषश्वाधिजनेनापि[18] विनासा-
वभ्रभ्रेषं[19] मत्तमयूरं वनमेति ॥

(1) M begins the Chapter with the *sūtra* 7/1. ; S begins with तत्रातिजगत्याम् (2) Heretofore A writes ॥ सू ॥ instead of the chapter number at the beginning of each *sūtra* (3) M· त्रिदशकौ (4) M : भित्वाऽर्थे (5) A· °नध्याय (6) M · य तिष्ठन् ; S · कं वा न (7) A · °योग (8) A : प्रहर्षणीनाम् ; M · प्रहर्षिणीनाम् (9) A adds here समुद्रनवकौ (10) M नवकश्च (11) A· विभावरी मुहु (12) M : अभीप्सतो (13) M श्रिये (14) A · धन्ये (15) A · वर्त......काम , S : वर्धितुकाम (16) A · ग्लानङ्गानां (17) A स्मरभीतीत्यत्र न चित्रम् , M स्मरतीत्यत्र विचित्रम् (18) A काष्ठाश्लेषश्वासोजनेनापि , M कष्ठ श्लेष° (19) A : विनाशावभ्राभ्रेषं ; M विना सा वभ्रे भ्रेषन S· विना° °ण वेष°

अपि च तमसजगा लक्ष्मीः—

लक्ष्मीवता पुरुषवरेण साध्यते
धर्मो विमुक्तिरपरमप्यमीप्सितम्[20]।
लक्ष्मीवतैव कुपुरुषेण ह्रीयते
सर्वं त्वितरच[21] न चपलस्य[22] सा शुभा[23]॥

सजौ द्विकौ गश्च जया, सुमङ्गला वा सुनन्दिनी वा[24]—

चरितं[25] यशांसि विजयात् सुमङ्गलां[26]
रमणीश्च लोकरमणीं सुनन्दिनीम्[27]।
सकलं करोति विमलं धनागमः[28]
पदवीञ्च[29] मोक्षपदनिर्मलीमसाम्[30]॥

सजौ सौ गश्च[31] भ्रमरः—

कलया चिराय चिनुते निकरेभ्यो
धनमेक एव[32] मधुना[33] भ्रमरौघः[34]।
*अपरः पुनस्तदपहर्तुमुपायो-*
स्तनुते[35] सदा मतिमतामभियुक्तः[36]॥

अथ शक्वर्याम्—

॥ ७ ॥ असंबाधा मतौ न्सौ गाविन्द्रियनवकौ ॥ ४ ॥

मतनसा गौ च द्वावसंबाधा[37]। पञ्च नव[38] च यतिस्थानम्-

*आशिष्यालोलाः[39] सुरभिसुमनसः[40] कान्ता-*
स्वेदिव्यायामप्रसरतमुषितव्राताः[41]।
[86] एषस्त्वधिभ्यो[42] घनवन[43]विरमद्गो
वातो व्याचष्टे[44] वन[45]वसतिमसंबाधाम्॥

(20) M drops the first-half of the verse ; S : °प्यभावितम्। (21) A & M ततश (22) A : नगपरस्य ; M न च कलस्य (23) A : शुभि (24) A : सजौ द्विकौ गश्च सुमङ्गलौ वसुनन्दी वा ; M सजौ द्विकौ च विजयसुमङ्गला॥ सुनन्दिनी वा॥ ; S : सजसा जगौ च विजया सुमङ्गना। सुनन्दिनी वा॥ (25) A : चलितं ; S : चक्ति(26) A विजयां सुमङ्गलां (27) A reads the second *pāda* : ......अनिमा (28) M : विमल स्तनंगम (29) M : पदवीन्तु (30) A : °निर्मलधाम ; M : निर्मलीमगम् ; S : निर्मलं मम (31) adds wrongly : दौ (32) A : एव (33) M मधुराट् (34) M & S : भ्रमरौघम (35) A : पुनस्तदपहर्तुमुपायंस्त.. ते (36) A : मभिमयारमकौमुक्त ; M : मतिमतामविमुक्त ; S : मतिमया भीतियुक्त (37) M : वंतनसा गौ च दौ असंबधा (38) M : पञ्चनव (39) A : आशिष्यामोदि ; M : आशिल्प्या लोला (40) M : स्युरभिसुमनस (41) A : स्वेदिव्यायामभृतरमपुषितव्राते ; M : स्वेदिव्या यान्व मतरत प्रषितव्राते ; S : स्वेदिव्यायामभृतरसप्राणव्राते (42) A : एताधिभ्यो ; M : एकाताधिभ्यो ; S : एषाधिभ्यो (43) A : घनवह° (44) M : वा चष्टे (45) A drops वन

॥ ७ ॥ अपराजिता नौ सौ लगौ[46] स्वरऋषयः ॥ ५ ॥

नौ द्वौ रचलगा[47]श्चापराजिता । सप्त सप्त च[48] यतिस्थानम्[49]—

प्रसवमुरभयो[50] निलीनमधुव्रता[51]-
स्तरुणकिसलया[52] वनश्रिय[53] आरताम्[54] ।
इयमपि वनजा लता पुरवासिनां
हरति कुसुमिता मनांस्यपराजिता ॥

॥ ७ ॥ प्रहरणकलिका नौ भनौ लगौ च ॥ ६ ॥

नौ द्वौ भनलगाश्च प्रहरणकलिका । चकारात् पूर्वयत्यनुकर्षः[55]—

पिकरुतहृषिता परिगत[56]पवना
तरुगतनयना[57] मधुरसरसिका[58]
मृगमदमुदिता वन इव जनता
प्रचलति[59] मदनप्रहरणकलिका ॥

वानवासिका च ॥

॥ ७ ॥ वसन्ततिलका त्भौ जौ गौ ॥ ७ ॥

त्भौ जौ द्वौ गौ च वसन्ततिलका ॥

॥ ७ ॥ सिंहोन्नता काश्यपस्य ॥ ८[60] ॥

एषैव सिंहोन्नतेति काश्यपस्याचार्यस्य मतेन[61] ॥

॥ ७ ॥ उद्धर्षिणी सैतवस्य ॥ ९ ॥

एषैव उद्धर्षिणीति[62] सैतवस्याचार्यस्य मतेन—

सिंहोन्नताभ्र[63]समयाप्तपयोधरश्री-
र्हेमन्तहेमकमला[64] शरदभ्रवासा[65] ।
उद्धर्षिणी शुचिगुणैः[66] शिशिरालकान्ता
कान्ता[67]वसन्ततिलका च गिरि[68]र्मुमुक्षोः ॥

(46) A : ग्लौ ; M : त्गौ (47) A रसगला° (48) M drops च (49) M & S omit स्थानम् (50) M : प्रसन° (51) A : लिनिममधुव्रता (52) A : °स्तरुण तरुण (53) A वरभिय (54) A drops आरताम् (55) M : पूर्वयत्यार्क्ष्य (56) A : पिकरुतहृषितपरिगृत° (57) A : °पवनान्तरागनयना (58) M : मधुकररसिका ; S : मधुकररमिका (59) A : चलति न ; S : प्रचरति (60) M omits this *sūtra* (61) M adds वा (62) M : उद्दर्षिणी (63) M : सिंहोन्नतात्क° (64) A & M : हेमन्त-हेमपद्मना (65) A : शमदभ्रवाम ; S : शरभद्रवासा (66) M : शिशुगुणै (67) M : का ता (68) A omits च गिरि ; S : न गिरे

अपि च—नरौ[69] ह्रिकौ लगौ सुकेसरम्[70]—

हृदि यदम्बुजस्य[71] मुकुलं सुकेसरं[72]
वहति तत्र यो हरिमनन्तमव्ययम्।
स[73] खलु नित्यमर्जयति[74] शोभनं धनं
न हृदि[75] हरमोघधनभारमुद्वहन्॥

मजसना[77] गौ च द्वौ स्खलितकान्तिः[76]—

प्राग्बहुधनो[79] बहुयशाश्च भुवि[80] भूत्वा
दैवरचितादपि[81] पुनश्चरति भैक्ष्यम्।
जीवति[82] कथं पुनरसौ स्खलितकान्तिः
प्राप्तयशसां हि मरणं वरमकीर्तेः[83]॥

इन्दुवदना[84] लघुरान्त्य इह यदा॥ अथातिशक्वर्याम्—

[87] ॥ ७॥ चन्द्रावर्ता नौ नौ स् ॥ १०॥

नाश्चत्वारः सश्च चन्द्रावर्ता। शशिकलेत्यन्ये[85]—

सुरसदसि हरिमजत[86] सरसिजो
विषमशररिपुरतिकृशशशिकलाम्।
विषमुरगकुलमसृतममरगण
कुटिलतरविधिचरितमिद[87]मसमम्॥

सप्तस्वष्टसु यतिः॥

॥ ७॥ मालर्तुनवकौ चेत् ॥ ११॥

एषैव[88] षण्णव च यतिश्चेन्माला[89]—

राजमिव किल परशिरसि विनिहितो
भिरमपि[90] दृढमभिदधति[91] परगताम्।
परविहितसिचयमिव[92] परवनिता
परतनुमिव निजतनुमपि सुधिय[93]॥

(69) M omits अपि च and starts : नरौ (70) M : सुकेनुमाला ; S : सुकेशरम् (71) A : मरं बजन (72) A & S : सुकेशरं (73) A : न (74) A : नित्यमात्रयति ; M : कृत्यमार्जमन्नीति ; S : नित्य मर्जयति (75) A : न खलु (76) M : शत्रु॰ (77) A : मजनमा (78) M : स्खलितकान्ता च (79) A :...ना (80) A : बहुविन (81) A : दैवचरितादपि (82) A drops जीवति (83) M : मरणोऽ (84) A & M : इन्दुवदना (85) A . शशिकलेत्यन्ये। एतामेव शशिकलेति केचित्। M : एतामेव शशिकलेति यावत्। (86) M · हरिमभजति (87) M : ॰रचितमिद॰ (88) M : चन्द्रावर्तैव (89) A यतिस्थानचेत् (90) A : भिरमिव (91) M : दृढमपि दधति ; S : दृढमभिधरतु (92) A : परजनपुरसिचमिव ; M : परपरिहितसिचमिव ; S : परजनहितसिचमिव (93) M : सुधयः

॥ ७ ॥ मणिगुणनिकरो[94] वस्वृष्यश्चेत्[95] ॥ १२ ॥

चन्द्रावर्तैवाष्टसु सप्तसु यतिश्चे[96]न्मणिगुण[97]निकरः—

परजनयुवतिषु कृतरणकः[98]

कुलमपसदयति[99] तिरयति सुयशः[100]।

स्थगयति गुरुमपि गुणगणमखिलं

कुसुमजरुचिमिव[101] मणिगुणनिकरः[102]॥

[103]इदमलिशरूर्मिन्नेपुरकं वृत्तम्। ईर्ष्यां गायत्र्यां वृत्तं[104]मिजिदुष्णिहि सरलं धृतौ विमलमतिधृतौ[105] शुकपदं कृतौ[106] कनकलताऽभिकृतौ समकम्॥

॥ ७ ॥ मालिनी नौ म्यौ यश्च ॥ १३ ॥

नौ द्वौ मो यौ च द्वौ मालिनी। चकारात् पूर्वयत्यनुकर्षः—

परकपटमयानामर्थवत्सु स्थितानां[107]-

मद्भगुणशतानामध्वगैः सङ्गतानाम्।

न हि गुणलयनीत्याम्तुल्यमन्य[108]द्धुना—

मितिविदपि वृणीते[109] पण्डितो मालिनीस्ता[110]॥

नान्दीमुखीति[111] भरतः। एवैव[112] शक्यां करिमकरभुजा[113] स्यादन्तिमं ग विना[114]। अपि च। नो जौ द्वौ मरौ[115] चारविन्दम्—

भवनु[116] मुखं युवते सपद्म सकर्णिकं[117]

भ्रमरनिपान-[ 88 ]-पदं सदा[118] विकचं श्रिया[119]।

न तदरविन्दसमं तथाऽपि मतं यतो[120]

जलदृढसंगपदं सगालदश[121] सदा॥

(94) M : मणिगणनिकरो (95) A omits चेत् (96) A अष्ट सप्त च यतिस्थानश्चेत्; M adds च (97) M drops गुण° (98) M : कृतरणरणिक। (99) M °दशयति, S °शदयति (100) A सुत्वयशः (101) A : कुसुमजरुचिरिव, M : कुसुमितरुचिमिव (102) A : मणिगुणनिकस ; M मणि गर्णनिकरम् (103) M & S add a name here : चित्रा च। (104) A omits : गायत्र्यां वृत्तम् (105) A : विमलमति.। अलिधृतौ (106) M प्रकृतौ (107) M : मरकपटमप्यूनां पूर्वतसुस्थितानां (108) A : गुणलयनीत्यस्तुल्य° M : गणनयनीक्स्तुल्य°, S गुणलयनीचाम्तुल्य° (109) M : इदमप-वृणते; S : इति वदति वृणीत (110) A पण्डिता° M मण्डिता° S मण्डनमालिन्दन्या (111) A : नान्दिमुखोभि°; M : नदीमुखमिति (112) M : एष्वेव (113) A : हरिमकरविना (114) A drops after स्यात्; M : स्याद्वत्तमं ग विना; S : स्यादशिमं गं विना (115) A मौ द्वौ भरौ (116) M : भवति (117) A : मपद्मकर्णिकं (118) A & M drop सदा (119) A : भिया (120) तथापि मतमतये; M : तथा विमतयतो, S : तथाऽभिमत यतो (121) A : जलदृढसंगपदा तसालदशा; S : जलदृढसंगपदं सत्रालदश

इदमेव तृतीयचतुर्थयोर्व्यत्यासात्[122] प्रमद्रकम्[123]। रगौ मौ च[124] द्वौ ररच सुन्दरं वा रमणांशुकं[125] वा मणिभूषणम् वा—

सुन्दरं वदति धारयते रमणांशुकं
दर्शनाय च करोति निजं मणिभूषणम्।[126]
एवमादि विधिना वनिता नयते[127] वशं
तत्र पण्डितजनो[128] न विमुह्यति[129] नापरः॥

अथाष्टौ—

॥ ७ ॥ ऋषभगजविलसितं भ्रौ नौ नगौ स्वरनवकौ ॥ १४ ॥

भरौ नास्त्रयो गुरुश्च ऋषभगजविलसितम्। सप्त नव च यतिः[130]—

पिङ्गलनागशास्त्रमिव गहनमृषिगतं[131]
धीर्मम मोहवर्त्म[132] कथमनुजिगमिषति।
युज्यत[133] एव वा तदनुविशति हि हरिणी[134]
काननमुद्धतागमृषभगजविलसितम्॥[135]

अपि च। नो जास्त्रयो रगौ च वाणिनी—

यदभिमतः[136] स्वयमेव विनश्यति स्मरोऽयं
विषयसुखानुभवेन[137] निरिन्धनो यथाऽग्निः।
न तदुचितं पुनरेव नवैर्हि[138] वाणिनीना-
मभिसरणैः[139] प्रभवत्ययमिन्धनैरिवाग्निः.[140]॥

इयमेव[141] सप्तमाष्टमयोर्लघुगुर्वोर्व्यत्यासात् केषाञ्चित् वाणिनीति[142]॥

अथाश्वष्टौ—

॥ ७ ॥ हरिणी न्सौ म्रौ स्लौ ग्रससमुद्रर्षयः ॥ १५ ॥

नसमरसलगा[143] हरिणी। षट् चत्वारः सप्त च यतिः[144]—

विचरतु वने वन्यैर्जीवन्नरो हरिणीसखः[145]
श्रयतु यदि वा नाना सस्यैर्नवैर्हरिणी भुवः[146]।

(122) M : तृतीयचतुर्थयो (123) A प्रवत्कम् ; प्रभन्दकम् (124) M drops च (125) A : सुन्दररमणां शुकं (126) M drops मणि॰ (127) M : वनितां यते (128) M : मण्डितज्नो (129) A : न मुह्यति (130) A : यतिस्थानम् (131) A : ॰कृतं (132) A : धिर्मम मोहवर्म ; M : धीर्मम पद्मवर्त्म (133) M : युज्यते (134) A . तनुविशति हरिणि ; S : तदु निविशति हरिणी (135) M : काननमुद्धतामृषभगज-विलसितम् ; S : काननमुर्नरागमृषभगजविलसितम् (136) A : यदभिमत ; M : यदभि मत (137) M : सवनसुभानुभवेन , S : विषनसुखानुभवेन (138) S : नवैश्च ; A : नवै (139) A : ॰महिसरणैः : (140) M omits the second half of the verse (141) M : इदमेव (142) A : मारिणीति ;M : वाहनो (143) A : नसमरननगा (144) A : यतिस्थानम् (145)M : हरिणीसुखम् (146) A : हरिणीर्भुव ; M : हरिणीभुव

मदनहरिणीस्तन्वङ्गीर्वा[147] करोतु सखी:[148] स्त्रियः
सततमथ वा मुक्तिं याचे महाहरिणी हरे:[149] ॥

इह यदि लघवः षट् पूर्वं स्यु[150]स्तदा ललितं धृतौ। यदि च दशकाद्गोऽन्योऽपि सा धृतौ हरिणीपदम् ॥[151]

॥ ७ ॥ पृथ्वी ज्सौ ज्सौ य्लौ ग्वसुनवकौ[152] ॥ १६ ॥

जसौ द्विकौ यलगाश्च पृथ्वी। अष्टौ नव च यतिः[153]—
नृपोऽपि शयने क्वचित् [ 89 ] स्वपिति तण्डुलप्रस्थभुक्
परोऽपि लभते सदा फलमिदं कथश्चिज्जनः।
पृथ्वेव[154] मनुते नृपः सहजलाशयैः सप्तभिः
वधूमिव कुलोद्भवामनुभवामि[155] पृथ्वीमिति ॥

॥ ७ ॥ वंशपत्रपतितं भ्रौ न्भौ न्लौ ग्दिग्यदयः ॥ १७ ॥

भरनभनलगा वंशपत्रपतितम्। दश सप्त च यतिः[156]—
सरभसतत्त्वबुद्धिरहिता मन उपशमनी
मुद्रमदादिकेषु[157] यदि सा बहु मुखरयति[158]।
जात्यमणिष्वविक्रियमिदं[159] जगदपि विशति
दमाचित[160]वंशपत्रपतितं कृशमपि[161] नदति[162] ॥

॥ ७ ॥ मन्दाक्रान्ता म्भौ न्तौ तृगौ ग् समुद्रर्तुस्वराः ॥ १८ ॥

मभनास्तौ च[163] द्वौ गौ च मन्दाक्रान्ता। चत्वारः षट् सप्त च[164] यतिः[165]—
अत्याक्रामेत् सुजनशतकं वल्लभं स्वामिव स्त्री[166]
मन्दाक्रान्ता न हि रसकरी शोभनाऽप्युच्चयष्टिः।

(147) A : °स्तदङ्गीर्वा (148) A : सखो ; M & S : दुखो (149) M : सततमथ वामोक्षं या चेन्महाहरिणो हरे ; S : सततमथ च मुक्त्यं याचे महाहरिणो हरे (150) M : सा (151) A : यदिह दशकाद्गोऽन्यो हि स्या तदा धृतौ हरिणापदम्। हरिण हरितवर्ग । M : यदि च दर्शनात् गोन्योपि सा धृतो हरि त्रिपदम्। S : यदि च दशमाद्गोऽन्यो धृतौ हरिणीपद नाम वृत्तम। (152) A : °मुनवकम् (153) A : अष्टौ नव च यतिस्थानम् ; M : अष्टनवकौ च यतिस्थानम् (154) A : वृथेव (155) A : कुलोद्भवामि (haplology) (156) A & M : यतिस्थानम् (157) A : जुन टिटिकेषु (158) A : बहु बरयति (159) M : °मणीष्वविक्रयमिदं ; A : °मणिष्वतिक्रियमिद (160) M : चित्रित (161) M : भृशमपि ; S : कृशमपि (162) A : न दहति (163) A omits च (164) M : चत्वार सप्त षट् च (165) A & M : यतिस्थानम् (166) A : अत्याक्रामेत् सुजनशतकं वल्लभा स्वमिव स्त्री । M : अत्याक्रामेत्सुजनसदृश वल्लभ स्वामिवस्त्रम् ; S : अत्याक्रामेत् सुजनसुहृदं वल्लभं स्वामवस्था

नैवाक्रामेत् खलपरिषदं वाग्मनुष्यामिव स्त्री
मन्दाक्रान्ताऽप्युरगवनिता मुक्तबन्धेव भीत्यै ॥

अत्रत्यामेषा मदनललिता न्सौ[167] चेद्दशकात् । भाराक्रान्ता भवति दशकाद्दश नगणौ गुरु च कुर्यात्[168] । षड् चेल्लघव इह तदा स्याद्धनौ चन्द्रलेखा ॥

## ॥ ७ ॥ शिखरिणी य्मौ न्सौ भ्लौ गरुद्राः ॥ १९ ॥

यमनसभलगाः शिखरिणी । षडेकादश च[169] यतिः[170]—

अपत्यं वा भव्यं द्रविणमथ[171] वा स्वादुपचितं
वधूर्वा चार्वङ्गी[172] यदि वसतु गेहेऽपि पुरुषः[173] ।
न चेत् सर्वं हित्वा[174] व्रजतु[175] वनमुग्राय तपसे
कथं भुङ्क्ते नाज्यं न दधि न च दुग्धां शिखरिणीम्[176] ॥

धृतौ तु क्रोडेयं यदि तसगणौ द्वौ द्वादशात्[177] ।

अपि च ।[178] नजभा जौ द्वौ लगौ च[179] नर्कुटकम्[180]—

निवसतु [90] नाम वेश्मनि कथञ्चिदयं पुरुषो
यदि रतिमूलयौवनवती[181] वनिताऽस्ति गृहे ।
अथ तु न सा न तद्गृहमवेहि गृहाह्वयकं[182]
न खलु सुखं सुखाह्वयदं गतनर्कुटकम्[183] ॥

यतिरिह सप्त षड् जलधिश्च यदि कोकिलकम्[184] ॥ अथ धृतौ—

## ॥ ७ ॥ कुसुमितलतावेल्लिता म्तौ न्यौ याविन्द्रियर्तुस्वराः ॥ २० ॥

मतना यायश्च[185] यदा कुसुमितलतावेल्लिता । पञ्च षट् सप्त च यतिः[186]—

एषा प्राक् तावत्[187] कुसुमितलतावेल्लिता षट्पदैः-
रस्यां मानज्ञाः पुनरपि कटाक्षार्पयन्त्यैव भृङ्गान्[188] ।

(167) A : स्यात् म्नौ ; M : न्मौ (168) A . दशकाद्दश नगणौ गुरु कुर्यात् ; M : दशकाद्दश नगणौ गुरु कुर्यात् ; S : दशमाद्दश. (169) M : षट् च एकादश च (170) A & M : यतिस्थानम् (171) A : सुखदुःखं ; S . सुवनवसो (172) A : चारुः (173) A : गेहे नु पुरुष ; M : गेहे विपुरुष (174) A : त्यक्त्वा (175) M : विशतु S : वसतु (176) A : भुङ्क्ते नाज्यं न दधि च मुग्धा शिखरिणी ; (177) A : द्वादशतरे ; M : द्वादशगौ (178) M drops अपि च (179) A drops च (180) M : नर्कुटकम् (181) A : युवयौवती (182) A : अथ तु न सा तु तद्गृहवेहि गृहाह्वयं ; M : अथ नहि न तद्गृहमवेति गृहाधमकम् ; S : अथ तु न सा न तु गृहमवेहि गृहाह्वयं (183) M : नर्कुटकम् (184) A reads : इरनेर सप्तसु षट्सु चतुर्षु च यतिरचेत् कोकिलकम् ; M : कोकिलम् (185) M drops च (186) A & M : यतिस्थानम् (187) M : एषा प्राक् तावत् (188) A : कटाक्षैरर्पयन्ति भृङ्गान् ; M : कटाक्षर्पयन्तीव दृङ्गान् ; S : कटाक्षर्पयन्त्येव भृङ्गान्

एतां[189] गन्धार्थे दिशि दिशि भृशं लोलयन्ति प्रवाता[190]

नूनं मन्यत्वं चपलमनसां सन्निधौ[191] दुःखहेतुः ॥

इहान्योऽ[192]प्यादौ चेल्लघुरतिधृतौ मेघविस्फूर्जितं[193] स्यादम्भा वा सुवृत्ता वा। षट् चेत् पञ्चम्यां लघव इह तदा पुष्पदामातिधृत्याम्। मकारौ द्वावेतौ[194] यदि युगपदमु[195] विद्धि शोभा[196] कृतिस्थाम्। अपि च। नसौ[197] मौ द्वौ यौ चानङ्गलेखा—

जड[198]जन हृदि प्रागेवासह्यां[199] हारिभिर्मा विभेदै-

रिचरपरिचिता न्यस्यत्येषोर्व्यामङ्गनाऽनङ्गलेखाम्[200]।

पुनरपि च तां निष्पीतां कृत्वा[201] मन्मथं वर्णयन्त[202]

कठिनहृदया:[203] कानेते लोकान् काव्यकारा[204] व्रजन्ति ॥

षट् पञ्च सप्त च यतिः[205]। अथातिधृतौ[206]—

॥ ७ ॥ शार्दूलविक्रीडितं म्सौ ज्सौ तो गादित्यर्षयः ॥ २१ ॥

मसजसाः तौ द्वौ गश्च शार्दूलविक्रीडितम्। द्वादश सप्त च यतिः[207]—

मन्ये धन्यजनस्य कौशलमिदं यद्धर्ममध्वंसयन्[208]

कृत्वा स्निग्धविदग्धविभ्रमरसश्लाघ्याः[209] सखीर्वाग्मिनीः[210]।

वैदग्ध्यं मकरध्वजस्य[211] भजते[212] हर्म्यस्थलेऽभ्रंलिहे

शैले[213] वा मृगशीलमिच्छति विना[214] शार्दूलविक्रीडितम् ॥

इदमेव कृतौ[215] यदि लोऽन्यो[216] वीतगो[217] मुखतो लघुश्च[218] मुखजो मत्तेभविक्रीडितम्[219]।

[91] अपि च। ज्सौ त्रिशो[220] गश्च रतिलीला[221]—

यदा खलजनो[222] गदोद्यतकरं[223] निशामयति[224] मृत्युं

गतश्च नरकं विकर्मजफलं[225] विपत्तिशतशाली[226]।

(189) M : एतान् (190) A : प्रवाता M : पुरा ता (191) A : चपलजनतासन्निधौ ; S : चपलमन-सन्निधौ (192) M : drops अन्यो (193) A : मेघविस्फूर्जता ; M मेघविस्फार्जितं (194) M : मकरणाद्‌वितौ (195) A : पदमुं , M : युगपदिमौ , S : यद्यमुं (196) A : शौना (197) M : नौ (198) M : जल° (199) M : प्रागेवा सन्ध्यां (200) A : °श्चिरदिरचाता न्यस्येत्येषोर्वीमङ्गनानङ्गलेखाम् ; M : °रिचरपरिचिता न्यस्यत्येषोर्वीमङ्गनाऽङ्गलेखाम् (201) A : निष्पताकं तु ; M : निष्पत्राकृत्या ; S : निष्पत्ताकृत्वा (202) A & S : वर्धयन्त (203) A कलिणहृदया (204) A : लकावलिका ; M : लोकान् काव्यकारान् (205) A & M : यतिस्थान (206) M : अथातिधृत्याम् (207) A & M : यतिस्थान (208) M : वृद्धाधविच्छसि मद् ; S : यद्धाधमध्वसयद् (209) A श्राघ्या ; M : श्लाघ्या (210) A : सखी वाग्मिन (211) M : मकरध्वजाय (212) M : भवते ; S : भवति (213) M : शेते (214) A : मृगशीलमिच्छतिना (215) A : इदमवकृतौ (216) A : विनोऽन्या ; M : तोऽन्यो (217) A drops the word ; M : विनतो, S विलगो (218) M निवरच ; S : लवरच (219) A : मत्तेभविक्रीतम् (220) M : अपि चामौ न् तौ ; S : अपि च। जसौ तृणौ (221) A : गश्चातिलीला ; M : गश्चरती लीला ; S : गश्च ते लीला (222) A . खलुजनो (223) M : गदोद्यभकरं (224) M : विनोकयति (225) A : परत्र नरकेऽपि कर्मजफल ; M : गतं च न के विकर्मफलज (226) A : विपत्तिशतशालि

तदाशानमपि त्यजेदतिमयाज्जनः[227] किमुत हेयां[228]
परस्य महतो जनस्य वनितास्वनित्यरतिलोलाम् ॥

अथ कृतौ[229]—

॥ ७ ॥ कृतिः ॥ २२ ॥

कृतिरित्यधिक्रियते[230] । [231]कृतिग्रहणमुत्तरार्थम् । वक्ष्यते[232] ग्लिति वृत्तमिति (7/24) तत्र विंशतेरक्षरायां ग्रहणार्थम्[233] । अत्र पूर्वापरपादार्थवशात्[234] संख्यानियमो नाश्रीयत इत्युक्तम् ॥

॥ ७ ॥ सुवदना म्रौ भ्नो यभौ ल्गौ स्वरर्तुरसाः ॥ २३ ॥

मरभनयभलगाः सुवदना । द्वौ सप्तकौ षट्कश्च यतिः[235]—

न्यस्तार्धेपूत्तमा धीर्गुरु[236] लघु वा तिष्ठत्यनलसा[237]
तिष्ठन्त्येवाग्रपादे[238] शिरसि च लसिता[239]न्यस्ता [240]सुमनसः ।
शक्यं वा दुष्करं वा तनुरपि कुरुते[241] कार्यं गुणवती[242]
स्वामित्वं[243] प्रेष्यतां वा [244]व्रजति वरवधूर्भर्तुः[245] सुवदना ॥

॥ ७ ॥ ग्लिति वृत्तम् ॥ २४ ॥

गुरुर्लघुर्गुरुर्लघुरित्यावृत्त्या[246] वृत्तं नाम वृत्तम्—

मृद्वनल्पशिल्पतल्परम्यहर्म्यमावसाय[247] वा तपस्य
नम्यगम्यशालिशालिभक्तभुक्तिमाचराय[248] वा तपस्य ।
कामकालकान्तकार्यकारि[249]कामिनीं भजाय वा तपस्य[250]
वित्तमप्रमत्तमुत्तमं[251] समाजयाय[252] वाऽऽर्यवृत्तमेव ॥

(227) M : त्यजेदपि भजानक (228) A : किमवृष्यं ; M : किमु रहे या (229) M reads *sūtras* 22 & 23 together as a single *sūtra.* (230) A drops this sentence. M adds after this the *vṛtti* on *suvadanā* and then continues the *bhāṣya* on *kṛtiḥ* (231) A adds अत्र here. (232) A & S : वक्ष्यति (233) M : ग्रहणार्थः (234) A : °पदार्थवशात् ; S : पूर्वार्धार्थवशात् (235) A & M : यतिस्थानम् (236) A : न्यस्तार्धेपूत्तमाधी° ; M : दत्तार्धेपूत्तमाधि (237) M : तिष्ठत्यानलसया ; S : तिष्ठत्यसलसया (238) M : तिष्ठन्तेवाग्रवादे (239) A : कृपिता ; M : लपिता ; S : लम्पिता (240) A & M : न्यस्ता (241) M : तदनु नाकुरते ; S : तनुरधिकुरते (242) A & M : गुणवति (243) M : प्राधान्यं ; S : स्वाधर्म्यं (244) A drops वा (245) A : परवधूर्भर्तुः ; M : वरवधूदत्तं ; S : वरवधूदात्तं (246) A : इत्यावृत्त्या ; M adds वृत्त्यावृत्तौ (247) A : °मावसाद ; M : °मावसाय (248) A : नम्यगम्यशालिभक्तभुक्तिमाचराद ; M : माचराय (249) M : °कार्यकार्य ; S : कार्यकार (250) A : भजा धवतपस्य ; M : भजात्यथा तपस्य (251) M : वित्तमप्रमत्त उत्तमं (252) M : समो जयाय ; S : समाजयेत

